अथ द्वितीया।

१ २ ३ २ ३१ २ ३ १र २र ३ क २ ३र

यआर्जीकेषुकृत्वसुयेमध्येपस्त्यानाम्।

२ ३ १ २ ३ १ २

येवाजनेषुपञ्चसु॥ २ *॥

"ये" वा सोमाः "आर्जीकेषु" ऋजीकानामदूरभवाः आर्जीकादेशास्तेषु† तथा "कृत्वसु" कृत्वानइति देशाभिधानम्, तेषु‡ कर्मवत्सु देशेषु च; किञ्च "पस्त्यानां" सरस्वत्यादीनां नदीनां¶ "मध्ये" समीपे च ये सोमा अभिषूयन्ते [ "ऋषयो वै सरस्वत्यां सत्रमासतेत्यादिषु§ नदीतीरे यज्ञकरणस्य श्रवणात्; किञ्च "जनेषु पञ्चसु" निषाद-पञ्चमाश्चत्वारो वर्णा पञ्चजनास्तेषु ‖ च "ये वा" सोमा अभिषुताः। ते सोमा अस्माकमभिमत-फलं ददात्वित्युत्तरेण सम्बन्धः॥ २॥

---

* ऋ० वे० ७, २, ५, ३।

† 'आर्जीकेषु—ऋजुषु'—इति वि०।

‡ 'कृत्वसु—कृतेषु स्थानेषु'—इति वि०।

¶ 'पस्त्यानां—गृहाणाम्'—इति वि०। "पस्त्यम्—इति निघण्टौ गृह-नामसु षष्ठं पदम् (३, ४,)।

§ "ऋषयो वै सरस्वत्यां सत्रमासत। ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति। तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति"--इति ऐत० ब्रा०।

‖ जनेषु पञ्चसु—'पञ्चजनाः, यजमानश्चत्वार ऋत्विजः'—इति वि०।

अथाष्टमी।

३ २ १ २ ३ १ २ ३ १ १ ३ २
अभ्या३ऽर्षानपच्युतोवाजिन्त्समत्सुसासहिः।
१ २ ३र १ २
अथानोवस्यसस्कृधि॥ ८* ॥

हे सोम! "समत्सु" सङ्ग्रामेषु "अनपच्युतः शत्रुभिरनाहतः "सासहिः" शत्रूणामभिभविता† त्वम् "अभ्यर्ष" अभिगच्छ चर। गतमन्यत्॥ ८॥

अथ नवमी।

२ ३ १ २ ३ १ २ ३ १ १
त्वांयज्ञैरवीवृधन्पवमानविधर्मणि।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ९‡ ॥

हे "पवमान" शोध्यमान सोम! त्वां "विधर्मणि" विविधफलस्य धारके यज्ञे "यज्ञैः" यज्ञ-साधनैः "स्तोत्रैः" "अवीवृधन्" यजमाना वर्द्धयन्ति। गतमन्यत्॥ ९॥

अथ दशमी।

३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
रयिन्नश्चित्रमश्विनमिन्दोविश्वायुमाभर।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ १०¶ ॥ ४

---

* ऋ० वे० ६, ७, २३, ३।

† 'सासहिःसाधनस्वभावः'—इति वि०।

‡ ऋ० वे० ६, ७, २३, ४।

¶ ऋ० वे० ६, ७, २३, ५।

अथ तृतीया।

१ २ ३ २ ३ १र ३ १ २ ३ १ ३ १ २

तेनोवृष्टिन्दिवस्परिपवन्तामासुवीर्यम्।

३ १ ३ २ ३ १ २

स्वानादेवासइन्दवः॥ ३ *॥ ११

"स्वानाः" सुवानाः तत्र चात्र अभिषूयमाणा "देवासः" देवाः दीपन-शीलाः स्तुत्या वा "इन्दवः" "ग्रहेषु" चमसेषु चरन्तः, "ते" सोमाः "नः" अस्माकं "दिवस्परि" परि-शब्दः पञ्चमी-द्योतकः, अन्तरिक्षादादित्याद्वा "वृष्टिम्" ["अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते। आदित्याज्जायते वृष्टिः (म० १अ०)"—इति वृष्टि-कारणत्वात्] किञ्च "सुवीर्यम्" शोभन-वीर्योपेतम् पुत्रञ्च धनादिकं वा "आ पवन्ताम्" प्रापयन्तु। यजमानः सोमेनाभिमत-फलानि प्राप्नोति खलु॥

"स्वानाः"-"सुवानाः"—इति पाठौ॥ ३॥ ११

२र र र १ २ १ र २ १

॥ जरावोधीयम्॥ येसोमासोवा। परावतायि।

२र १ २ १ र २ ४

येआर्वा२३वा। तिसुन्वायिरायि। येवादा१ःआर२३र्यां।

५र २ १ २ र र १ २ १ २ १

णा। वतो३४५ई। डा॥(१) यआज्जौ कोवा। षूक्तत्वमू।

२र १ २ १ र २ ४

यैमाध्या२३यिपा। स्तियानाम्। येवाजा१ना२३यिषू।

---

* ऋ० वे० ७, ९, ५, ४।

हे "इन्दो !" यागेषु क्रियमाण सोम ! त्वं "चित्रं" नानाविधम् "अश्विनम्" अश्ववन्तञ्च "विश्वायुं" सर्वगामिनं* "रयिं" धनं "नः" अस्मभ्यम् "आ भर" आहर । गतमन्यत् ॥ १० ॥ ४

तरत्समन्दीति चतुर्ऋचे द्वितीयसूक्ते—

प्रथमा† ।

१ २ ३ १ २ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
तरत्समन्दीधावतिधारासुतस्यान्धसः ।

१ २ ३ १ २ १ २
तरत्समन्दीधावति ॥ १‡ ॥

"मन्दी" देवानां हर्षकरः स सोमः "तरत्" स्तोतॄन् पाप्मनः सकाशात् तारयन् "धावति" दशापवित्रादधः क्षरति । तदेव दर्शयति—"सुतस्य" अभिषुतस्य "अन्धसः" देवानामन्नात्मकस्य सोमस्य धारा धावतीति । पुनरपि तदेवादरार्थं "तरत्समन्दीधावति"—इति¶ ॥ [यद्वास्या ऋचो यास्केनोक्तोऽर्थो द्रष्टव्यः, तद्यथा—"तरति स पापं सर्वं मदीयं स्तौति धावति गच्छत्यूर्द्ध्वां गतिं धारासुतस्यान्धसोधाराभिषुतस्य सोमस्य मन्त्रपूतस्य वाचास्तुतस्य (निरु०१३,६)"—इति ॥ २ ॥

* 'विश्वायुं—दीर्घायुष्येण सह आभर'—इति वि० ।

† 'तरत्समन्दीधावतीति-चतुर्ऋचः छन्दसिकाभाष्ये विस्तरेणोक्ताः, सप्रयोजनं तथाप्यत्र सङ्क्षेपेणोच्यते'—इति वि० ।

‡ छ० आ० ६, १, २, ४ (२भा० ५८४पृ०)=ऋ० वे० ७, १, १५, १ ।

¶ 'तरत्सः—तरति स पापं यस्य मन्दी धावति सोमस्य । सोमस्य धारा बहुला सुतस्याभिषुतस्य अन्धसोऽन्नस्य सोम-लक्षणस्य'—इति वि० ।

५ २ १ २२२ १ २ १ २ १

प। घमो३४५ई। तेनोवृष्टोवा। दायिवस्पराथि।

१ २ २ १ २ २ ४

पवान्ता२३मा। सुवीरायाम्। स्वानादा१यिवा२३मा:।

५ २ २

इ। इवो३४५ई। डा(३)॥ १६ *॥ [१ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य

पञ्चमः खण्डः ॥ ५ ॥

---

अथ षष्ठे खण्डे—

आतेवत्स इति द्व्यृचात्मकं प्रथमं सूक्तम्,—

तत्र प्रथमा।

१ २ ३ १२ १२ ३ १ २ ३ १ २

आतेवत्सोमनोयमत्परमाच्चित्सधस्थात्।

२ २ १ २ ३ २

अग्नेत्वाङ्कामयेगिरा॥ १ †॥

हे "अग्ने!" "वत्सः" ऋषिः "ते" तव "मनः" "परमाच्चित्" उत्कृष्टादपि "सधस्थात्" द्युलोकात् "आ यमत्" आयमन्ति आगमयन्ति। केन साधनेन? "त्वां" "कामये"

---

* ऊ० गा० ४प्र० १ख० १६गा०।

† छ० आ० १, १, १, ८ (१भा० १०४पृ०)=ऋ० वे० १९, ११५=य० वे० ५, ८, १६, १।

अथ द्वितीया।

२ १ २ ३ १ २ ३ १ २ ३ १ २

उस्रा वेद वसूनाम्मर्त्तस्य देव्यवसः।

२ ३ २ ३ १ २

तरत्समन्दी धावति॥ २*॥

"वसूनां" धनानाम् "उस्रा" उत्सरणशीला प्रदात्री "देवी" द्योतमाना स्तूयमाना वा यस्य सोमस्य धारा "मर्त्तस्य" मनुष्यं यजमानम् "अवसः" रक्षितुं "वेद" जानाति†। सिद्धमन्यत्॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ २ ३ १ २

ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे।

२ ३ २ ३ १ २

तरत्समन्दी धावति॥ ३‡॥

"ध्वस्रयोः पुरुषन्त्योः"¶ ध्वस्रः कश्चिद्राजा तथा पुरुषन्तिश्च, तयोरुभयोरत्र तद्योग-विवक्षया द्विवचनं द्रष्टव्यं "सहस्राणि" धनानां सहस्राणि "आ दद्महे" वयं प्रतिगृह्णीमः। तदस्माभिः प्रतिगृहीतं धनमुत्तममस्त्विति ऋषिः सोमं प्रार्थयत इति सोमस्य स्तुतिः। सिद्धमन्यत् यथावत्सार एतयोर्दानानि

---

* ऋ० वे० ७, १, १५, २।

† 'उस्रा दीप्ता वेद वसूनां, विद ज्ञाने, विद्लृ लाभे, विद सत्तायाम्, सर्वत्रा धारा'—इति वि०।

‡ ऋ० वे० ७, १, १४, ३।

¶ 'ध्वस्रयोः पुरुषन्त्योः—समान स्वभावयोः सोम-धारयोरपि द्रोणकलशेन सह सम्बन्धयोः पापध्वंसकरयोः'—इति वि०।

कामया अभिलषन्त्या "गिरा" स्तुत्या ["कामये"—इत्यचापि ये आदेशः पूर्ववत् । यद्वा त्वां कामये अभिलषामि] ॥

"कामये"-"कामया"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ २उ १२ठ ३ २३ २ ३ १ १ १२
पुरुत्रा हि सदृङ्ङसि दिशो विश्वा अनु प्रभुः ।

३ १ २
समत्सु त्वा हवामहे ॥ २ * ॥

हे अग्ने ! "पुरुत्रा हि" बहुषु हि देशेषु त्वं "सदृङ् असि" समान-द्रष्टा भवसि अतएव "विश्वाः" सर्वा दिश "अनु" लक्ष्य "प्रभुः" ईश्वरो भवसि । ईदृशं "त्वा" त्वां "समत्सु" सङ्ग्रामेषु रक्षणार्थं "हवामहे" आह्वयामहे ॥

"दिशः"-"विदिशः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १र २र ३ १ २
समत्स्वग्निमवसे वाजयन्तो हवामहे ।

१ २ ३ १ २
वाजेषु चित्रराधसम् ॥ ३ † ॥ १२

"समत्सु" मदेषु सङ्ग्रामेषु "वाजयन्तः" बलमिच्छन्तो वयम् "अवसे" रक्षणार्थम् "अग्निं हवामहे" । कीदृशम् ? "वाजेषु" सङ्ग्रामेषु "चित्रराधसम्" याचनीय-धनम् ॥ ३ ॥१२

---

* ऋ० वे० ५, ८, २६, २ ।

† ऋ० वे० ५, ८, २६, ४ ।

प्रतिजग्राह एवं तरन्त-पुरुमीढौ प्रतिजगृहतुः। तथाच शाट्यायनकम्—'अथ ह वै तरन्त-पुरुमीढौ वैदश्वौ ध्वस्नयोः पुरुषन्त्योः बहु प्रतिगृह्य गरगिराविव मेनाते तौ ह स्माङ्गुल्या सातं प्रतिमृशाते तावकामयेतामसातन्नाविवेद सातंस्यादात्त मिवैव न प्रतिगृहीत मिति भावे तच्चतुर्ऋचमपश्यतान्तरेण प्रत्यैतां तयोर्वैतयोरसातंसातमभवदात्तमिवैव न प्रतिगृहीतं स यः प्रतिगृह्य कामयेत"—इत्यादि ॥ ३ ॥

अथ चतुर्थी।

१र २र ३ २ ३ १ २ ३ १ २ ३ १२
आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे।
३ १ २ ३ १ २
तरत्समन्दी धावति ॥ ४* ॥ ५

"ययोः" ध्वस्र-पुरुषन्त्योः "त्रिंशतं" त्रीणि शतानि सहस्राणि च, "तना" वस्त्राणि "आ दद्महे" वयं "प्रतिगृह्णीमः" तयोरस्माभिः प्रतिगृहीतं तत् सर्वम् अप्रतिगृहीतमस्त्विति सोमम् ऋषिः प्रार्थयतइति सोमस्यैव स्तुतिः। गतमन्यत् ॥४॥ ५

एतेसोमाइति त्र्यृचं तृतीयं सूक्तम्—

तत्र, प्रथमा।

३१र १र २ २र २र ३ २
एते सोमा अभिष्टुतगृणाना; शवसे महे।
३ १ २ ३ १ २
मदिन्तमस्य धारया ॥ १† ॥

* ऋ० सं० ७, १, १४, ४।

† ऋ० वे० ७, १, २८, १।

५र र १ र २ १ २र
॥ वात्सम् ॥ आतेवत्साः । मनोयमत् । परमात् ।

१ २ १ २ ३ ४ ५ ४
चित्सधार२३स्थात् । अग्नायित्वा२३क्का३ । मयोवा । गां

५ २ र १ १ १ र
५यिरोऽ६हायि ॥(१) पुरुत्वाहो । सदङ्ङसि । दिशो

२ र १ १ १ २ २ ४ ५
विश्वाः । अनुप्रा२३भूः । समात्सू३त्वा३ । हवोवा ।

४ ५ २ १ २ र १र १
मा५द्दोऽ६हायि ॥(२) समत्मुवा । ग्निमवसे । वाजयन्तः

र १ १र २ २ ४ ५ ४
हवामा२३हायि । वाजायिषू३चा३यि । त्तरोवा । धा

५
५सोऽ६हायि(३) ॥ १७ ॥ [१] १२

अथ द्वितीय-तृचे—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २
त्वन्नइन्द्राभरओजोनृम्णंशतक्रतोविचर्षणे ।

२ ३ १ २ २ १ २
आवीरम्पृतनासहम् ॥ १ †* ॥

---

* ऋ० मा० ४प्र० १ख० १७सा० ।

† ऋ० आ० ५, १, २, ७ ( १भा० ८२४पृ० ) = ऋ० वे० ४, १, १०, १ ।

"मदिन्तमस्य" देवानां मादयितृतमस्य रसस्य सम्बन्धिन एते सोमा अभिषुताः सरूपाः "गृणानाः" स्तूयमानाः "महे" महते "अवसे" अस्माकं बलाय धारया "अक्षरन्त" गच्छन्ति ॥१॥

अथ द्वितीया।

२ १र २र ३ १२१ १ ३ २१ २
अभिगव्यानिवीतयेनृम्णापुनानोअर्षसि।
३ १२ ३ १ २
सनद्वाजःपरिस्रव ॥ २* ॥

हे सोम! "वीतये" देवानां † भक्षणाय "नृम्णा" नृम्णानि धनवत् प्रियतराणि "गव्यानि" गो-सम्बन्धीनि क्षीरादीनि "पुनानः" पूयमानः सन् "अभ्यर्षसि" अभिगच्छसि। हे सोम! "सनद्वाजः" दीयमानान्नः‡ त्वं "परि" परितः "स्रव" दशा-पवित्रादधः क्षर ॥ २ ॥

अथ तृतीया।

३२३ १ १३१२ १ २ ३१ २
उतनोगोमतीरिषोविश्वाअर्षपरिष्टुभः।
३ १ २ १२
गृणानोजमदग्निना ॥ ३¶ ॥ ६

* ऋ० वे० ७, १, २८, २।

† 'नृम्णा बलेन'—इति वि०।

‡ 'सनत् सदा'—इति वि०।

¶ ऋ० वे० ७, १, २८, ४।

हे "शतक्रतो" बहुकर्मन् ! "विचर्षणे" विद्रष्टः इन्द्र ! त्वं "नः" अस्मभ्यम् "ओजः" बलं "नृम्णं" धनं च "आ भर" आहर । "वीरं" वीर्योपेतम् "पृतनासहं" सेनानामभि-भवितारं त्वाम् "आ" याचामहे इति शेषः ॥

"आभरओजः"-"आरुतामोजः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१र २र ३ १ २ ३ २ ३ १ २ ३ १ २
त्वꣳहिनःपितावसोत्वम्मातामशतक्रतोबभूविथ ।
१ २ ३ १ २
अथातेसुम्नमीमहे ॥ २ * ॥

हे "वसो" वासयितः ! "शतक्रतो" बहुकर्म्मन्निन्द्र ! त्वं "नः" अस्माकं "पिता" पितृवत् पालको "बभूविथ" भव "त्वं" "माता" मातृवद्धारकश्च बभूविथ । अथ च वयं "ते" तव स्वभूतं "सुम्नं" सुखम् "ईमहे" याचामहे ॥ २ ॥

अथ तृतीया ।

१ २ ३ १२ १२
त्वाꣳशुष्मिन्पुरुहूतवाजयन्तमुपब्रुवेसहस्कृत ।
१ २ . ३ १ २
संनोरास्वसुवीर्य्यम् ॥ ३ † ॥ १३

---

* ऋ० व० ४, १, १०, १ ।

† ऋ० वे० ४, १, १०, २ ।

"उत" अपिच हे सोम! "जमदग्निना" जमदग्नि-नाम्ना ऋषिणा मया "गृणानः" स्तूयमानः त्वं "नः" अस्माकं "गोमतीः" गोभिर्युक्तानि "परिष्टुभः" परितः स्तोतव्यानि* सर्वाणि "इषः" अन्नानि देहीत्यर्थः ॥ ३ ॥ ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य द्वितीयः खण्डः† ॥ २ ॥

---

इमंस्तोममिति-तृतीयखण्डे‡—

प्रथम-तृचे,¶ प्रथमा ।

२ ३उ   ३ १ २   ३ १ २   ३
इमꣲस्तोममर्हतेजातवेदसे

१ २   ३ १ २   ३ १ २
रथमिवसम्महेमामनीषया ।

३ २उ   ३ १२   ३ १र
भद्राहिनःप्रमतिरस्यसꣳस

२र ३ १र २र   ३१र २र
द्यग्नेसख्येमारिषामावयन्तव ॥ १§ ॥

"अर्हते" पूज्याय "जातवेदसे" जातानामुत्पन्नानां वेदित्रे, जात-प्रज्ञाय जात-धनाय वा अग्नये "मनीषया" निशितया

---

* 'परिष्टुभः—परि समन्तात् स्तौति'—इति वि० ।

† 'उक्तं वक्ष्यमाणम्'—इति वि० ।

‡ 'सप्तर्चं प्रस्तोमः सप्तमद्य:'—इति वि० ।

¶ 'आग्नेयमाज्यम्'—इति वि० ।

§ ऋ० सा० १, ९, २, ४ (१मा २०३पृ०)=ऋ० वे० १, ६, २०, १ ।

[सहसा बलेन स्तोत्टभिर्युक्तः कृतः सहस्कृतः] हे "सहस्कृत" इन्द्र! [स्तुत्या हि देवताया बलं वर्द्धते, तस्य सम्बोधनम्]—"शुष्मिन्" अतएव बलवन्! "पुरुहूत" पुरुभिर्बहुभिर्यजमानैराहुतेन्द्र! "वाजयन्तं" बलमिच्छयन्तं त्वाम "उपब्रुवे" उपस्तौमि। "सः" त्वं "नः" अस्मभ्यं सुवीर्यं धनं "रास्व" देहि॥

"सहस्कृत"-"शतक्रतो"—इति पाठौ॥ ३॥ १३

५ १ ४ ५र १र र

॥ औपगवाद्यम्॥ तुवन्नाइइन्द्रआभरा। ओजोनृ

र २र १

म्णꣳशतक्रतोविचर्षणायि। आवौ२। हौ२। ऊवा

२ ५ १र १ २ ५ २ ४

२३यि। रा३४पा। जनासाहाम्॥(१) तुवꣳहा३यिन्नः

५र १ र र र र १

पितावसाउ। त्वम्माताशतक्रतोबभूविथा। अयौ२।

१ १ ५ २ र १ २

हौ२। ऊवा२३यि। ता३४यिसू। म्नमीमाहायि॥(२)

५र १ ४ ५र १र र १

तुवाꣳशू३ष्मिन्पुरुहूता। वाजयन्तमुपब्रुवेसहस्कृता। स

१ २ ५ २र १ १

नौ२। हौ२। ऊवा२३यि। रा३४स्वा। सुवीरायाम्।

र १ १ ५र र १ १ १ १

ऐ। हा२ए३। हिया३४औहोवा। ए३। उपा३१२

१११

३४५(३)॥ १८ *॥ [१] १३

---

* ऊ० गा० ४प्र० १ख० १८गा०।

बुद्ध्या "इमम्" एतत्स्वरूपं स्तोमं रथमिव यथा तक्षा रथं संस्क-रोति तथा "सम्महेम" सम्यक् पूजितं कुर्मः । तस्याग्नेः "संसदि" सम्भजने "नः" अस्माकं "प्रमतिः" प्रकृष्टा बुद्धिः "भद्रा हि" कल्याणी समर्था खलु अतस्तया बुद्ध्या स्तुम इत्यर्थः । हे "अग्ने" "तव सख्ये" अस्माकं त्वया सह सखित्वे सति वयं "मारिषाम" हिंसिता न भवामः अस्मान् रक्षेत्यर्थः । [ "अर्हते"—अर्ह पूजा-याम् ( भ्वा० प० ) "अर्हः प्रशंसायामिति ( ३,२,१३३) लटः शत्रादेशः, शपः पित्त्वादनुदात्तत्वम् ( ३,१,४), शतुश्चादुपदेशा-ल्लसार्वधातुक-स्वरेणाद्युदात्तत्वम् (६,१,१८६)। महे—मह पूजायाम् ( भ्वा० प० )। रिषाम—रिष हिंसायां (भ्वा०प० ) व्यत्ययेन शः(३,१, ८५) । तव—"युष्मदस्मदोर्ङसि (६,१,२११)" —इत्याद्युदात्तत्वम ॥१॥

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ १ २
भरामेध्मङ्कृणवामाहवीꣳषिते

३ १ २ ३ १ २ ३ २
चितयन्तःपर्वणापर्वणावयम् ।

३ १ २ ३ १ २ ३ १
जीवातवेप्रतराꣳसाधयाधियो

२र ३ १र २र ३ १र २र
ग्नेसख्येमारिषामावयन्तव ॥ २* ॥

हे "अग्ने!" त्वद्यागार्थम् "इध्मम्" इन्धन-साधनम् एक-विंशति-द्रव्यात्मकं समित्समूहं "भराम" सम्भराम सम्पादयाम,

* ऋ० वे० १, ६, ३०, ४ ।

अथ तृतीय-तृचे—

प्रथमा ॥

१ २ ३ १ ३ ३ १ २
यदिन्द्र चित्रमइह नास्ति त्वादातमद्रिवः ।
२ ३ १ २ ३ १ २
राधस्तन्नो विदद्वस उभया हस्त्याभर ॥ १ * ॥

हे "अद्रिवः" वज्रवन् ! "चित्र" चायनीयेन्द्र ! "त्वादातं त्वया दातव्यं यद्धनं "मे" मम "इह" अस्मिंल्लोके "नास्ति", हे "विदद्वसो" लब्धधनेन्द्र ! "नः" अस्मभ्यम् "उभया हस्ती" उभाभ्यां हस्ताभ्यां तद् "राधः" "आभर" आहर ॥

"मइह"-"मेहना"—इति छन्दोगानां बह्वृचानां पाठौ ॥१॥

अथ द्वितीया ।

१र २र ३ १ २ ३ १ २ ३ १र २र
यन्मन्यसे वरेण्यमिन्द्र द्युक्षन्तदाभर ।
३ २ ३ १ २ ३ १र २र ३ १ २
विद्याम तस्य ते वयमकूपारस्य दावनः ॥ २ † ॥

हे इन्द्र ! "यत्" "द्युक्षम" अन्नं "वरेण्यं" वरणीयं "मन्यसे" "तत्" द्युक्षम् "आभर" अस्मभ्यम् । "ते" तव सम्बन्धिनो "वयं"

---

* छ० आ० ४, २, १, ४ ( १भा० ७०४पृ० ) = ऋ० वे० ४, २, १०, १ ।

† ऋ० वे० ४, २, १०, १ ।

तदम् "ते" तुभ्यं "हवींषि चरुपुरोडाशादि-लक्षणान्यन्नानि वयं "कृणवाम" करवाम। किङ्कुर्वतः? "पर्वणा पर्वणा"* प्रतिपच्च-मावस्याभ्यां दर्शपूर्णमासाभ्यां "चितयन्तः" त्वां प्रज्ञापयन्तः स त्वं "जीवातवे" अस्माकं जीवनौषधाय चिरकालावस्थानाय "धियः" कर्माणि अग्निहोत्रादीनि "प्रतरां" प्रकृष्टतरं "साधय" निष्पादय। अन्यत् समानम्॥ [चितयन्तः—चिती सञ्ज्ञाने (भ्वा० प०) सञ्ज्ञापूर्वस्य विधेरनित्यत्वात् लघूपध-गुणाभावः। पर्वणा—"नित्यवीप्सयोः (८, १, ४)"—इति वीप्सायां द्विर्भावः, "तस्य परमाम्रेडितम् (८,१,२)"—इति परस्याम्रेडित-सञ्ज्ञायाम् अनुदात्तत्वम् (८, १ १९)। प्रतरां—तरबन्तात् प्रशब्दात् क्रिया-प्रकर्षे वर्त्तमानात् "किमेत्तिङव्ययघादाम्वद्रव्ये (५, ४, ११)"—इत्यामु-प्रत्ययः॥ २॥

अथ तृतीया।

०१ २ ३ १ २ ३ २ ३ १ ३
शकेमत्वासमिधꣳसाधयाधिय

२ ३ १ २ ३ १ २ ३ १ २
स्त्वेदेवाहविरदन्त्याहुतम्।

१ २ ३ १र २र ३ १ १र
त्वमादित्याꣳआवहतान्ह्यु३ऽश्म

२र ३ १र २र ३ १र २र
स्यग्नेसख्येमारिषामावयन्तव॥ ३†॥ ७

---

* 'पर्वणा—तृतीयैकवचनमिदं सप्तम्येकवचनस्य स्थाने द्रष्टव्यम्, पर्वणि भूयान् समर्थः'—इति वि०।

† ऋ० वे० १, ६, २०, ३।

"तस्य" तादृशस्योक्तलक्षणस्य "अकूपारस्य" [ अकुत्सितः पारो अन्तो यस्य तादृशस्यानन्तस्य "दावनः" दानस्य "विद्याम" स्याम ॥

"दावनः"-"दावने"—इति पाठौ ॥

अथ तृतीया।

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ २
यत्तेदित्सुप्राराध्यम्मनोअस्तिश्रुतम्बृहत्।

१ २ ३ १ २ ३ १र २र ३ १ २
तेनदृढाचिदद्रिवआवाजन्दर्षिसातये ॥ ३* ॥ १४

॥ इति चतुर्थः प्रपाठकः ॥

हे इन्द्र! "ते" तव "दित्सु" "प्राराध्यं" प्रकर्षेण स्तुत्यं "श्रुतं" "बृहत्" महत् यत् "मनः" "अस्ति", "तेन" मनसा हे "अद्रिवः" वज्रवन्निन्द्र! "दृढ़ाचित्" दृढ़मपि "वाजम्" अन्नम् "आ दर्षि" आदारयसि, "सातये" अस्मत्सम्भजनाय लाभाय वा ॥

"दित्सु"-"दित्सु"—इति पाठौ ॥ ३ ॥ १४

३ ४ ५ ३ १ ४ ५
॥ वौङ्कम् ॥ यदिद्रचित्तमइ। हना३। आस्तौ।

१र र र २ १ १
त्वादातमद्रिवः। राधस्ता२३न्नाः। वोवो२। ददसा

२ १ १ २
उ। उभया२३हा। स्तायार३। भा२३रा३४३ ॥(१)

---

* ऋ० वे० ४, २, १०, ३।

हे अग्ने! "त्वा" त्वां "समिधं" सम्यगिद्धं कर्त्तुं "शकेम" शक्ता भूयास्म। त्वञ्च "धियः"* अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि "साधय" निष्पादय त्वया हि सर्वं निष्पद्यन्ते यस्मात् "त्वे" त्वयि अग्नावाहुतम् ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकं हविः देवा "अदन्ति" भक्षयन्ति, तस्मात्त्वं साधयेत्यर्थः। अपि च त्वम् "आदित्यान्" अदितेः पुत्रान् सर्वान् देवान् "आवह" अस्मद् यज्ञार्थमानय। तान् हि इदानीं वयम् "उश्मसि" कामयामहे। अन्यत् पूर्ववत्॥ [शकेम—शक्लृ शक्तौ (भ्वा० प०), "लिङ्याशिष्यङ्(३,१,८६), अदुपदेशाल्लसार्वधातुकानुदात्तत्वे (६, १, १८६) अङ एव स्वरः शिष्यते। समिधम्—ञि इन्धी दीप्तौ (रु० आ०) अस्मात् सम्पदादिलक्षण कर्मणि क्विप्। त्वे—सुपांसुलुगिति (७, १, ३९) सप्तम्येकवचनस्य शे-आदेशः। उश्मसि—वश कान्तौ (अदा० प०), "इदन्तोमसि (७, १, ४६,), अदादित्वाच्छपोलुक् (२, ४, ७२), ग्रहिज्येत्यादिना सम्प्रसारणम् (६, १, १६)॥ ३॥ ७

॥ समन्तम् ॥ इमꣳ स्तोममर्हते जातवेदसायि। रथमिवसम्महेमामनीषया। भद्राहिनाःरइयिनाः। प्रामतिरस्यसꣳस। दयायि॥(१) भरामेध्मङ्कृणवामाहवीꣳषिता

* "धीः"—इति कर्मनामसु एकविंशतितमं नैघण्टुकम् (२, १)।

३ ४ ५र र ३ २ ४ ५ १ र
यन्मन्यसेवरे । णियाऽम् । आयिन्द्रा । द्युत्तन्तदाभ
र ० १ १र र
र। विद्यामा२३ता । स्यास्या२ । तेवयाम् । अकूपा
२ १ १ २ ३ ४र ५
२३रा । स्यादा२३ । वा२३ना३४३ः ॥(२) यत्तेदिक्षुप्र
र ३ २ ४ ५ १ ० र
रा । धियाऽम् । मामाः । अस्तिश्रुतम्बृहत् । तेनदा
२ १ १ र र २
२३र्ढा । चायिवा२यित् । अद्रिवाः । आवाजा२३दा ।
२ १ २ १
र्षायिसा २ ३ । ता २ ३ या ३ ४ ३ यि । ओ२३४ ५ ई ।
डा(३) ॥ १८* ॥ [१]

२ १ ४ ५ ४
॥ वसिष्ठप्रियम् ॥ यदिन्द्रा२३ । चित्रमङ्ख । ना
५ २र ३र १ ० र १ २ १
स्ती । त्वादा३तामद्रायिवो२ । राधास्तन्नो३ । विदा
३ ५ १ २ ३ ५ १ २ ३ ५
२द्वा२३४साउ । ऊभाओ२३४वा । याद्दाओ२३४वा ।
५ १ १ ४र ५र ४ ५
स्तियापूभरा ॥(१) यन्मन्या२३ । सेवरेणिम् । आयिन्द्रा ।
१ १ २ १ २ १ ३
द्युत्ता३न्तादा१भारा२ । विद्यामता३ । स्यतार्यिवा२३

* ऊ० गा० ४प्र० १ख० १८मा० ।

र र र २
यि। चितयन्तःपर्वणापर्वणावयाम्। जीवातार२३वायि।
१ २र र र १ २ १र २र १
प्रातराᳲसाधयाधि। योग्नायि॥(२)/शकेमत्वासमिधᳲ
२र १ र ३ १ १र र र र
साधयाधियाः। त्वेदेवाहविरदन्त्याहुतान्। तुवमा२३
२ १ र २ र १ १ १र
टो। त्याᳲआवहतान्ह्युश्म। स्यग्नायिसाख्या। औ
२ ३र २ १र २ १ २ २
होऽ३४वाहायि। मा। रायिषार२३मा३। होवा३हायि।
१ २ १
वयन्तार२३वा३४३। ओ२३४५ई। डा(३)॥ १५ *॥ ७

अथ द्वितीय-तृचे—

प्रथमा।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
प्रतिवाᳲसूरउदितेमित्रङ्गृणीषेवरुणम्।
२ १ २ ३ १ २
अर्यमणᳲरिशादसम्॥ १ †॥

हे मित्रावरुणौ! "मित्रं" त्वां "वरुणं" च "वां" युवां "रिशादसं" शत्रूणामत्तारम् "अर्यमणं" च "प्रति" प्रत्येकं "गृणीषे"

* ऊ० गा० १७ प्र० १ख० १५ सा०।

† ऋ० वे० ५, ५, ६, २।

५ १ २ ३ ५ १ २ ३ ५ ४
४याम्। आकाओ२३४वा। पाराओ२३४वा। स्यदा

२ १र ४ ५र ४ ५
५ना: ॥(२) यत्तेदी२३। सुप्राधियम्। माना:।

२ १ ७ २ १ २ १ २
अस्तो३अूतम्बृद्दा२त्। तेनाहढा३। चिदा२द्रा२३४यि

५ १ २ ३ ५ १ २ ३ ५ ४
वा:। आवाओ२३४वा। जान्दाओ२३४वा। पिसा५त

यायि। हो५ई। डा(३)॥ १८ *॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य

षष्ठ: खण्ड: †॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वर:॥ ८ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-

बुक्क-भूपाल साम्राज्य-धुरन्धरेण सायणाचार्य्येण

विरचिते माधवीये सामवेदार्थ-प्रकाशे

उत्तराग्रन्थे अष्टमोऽध्याय: ‡॥ ८ ॥

---

* ज० गा० ९३प्र० २ख० १९सा०।

† 'समाप्तश्चैतत्पञ्चममहः'—इति वि०।

‡ चतुर्थ: प्रपाठक: परिसमाप्त:'—इति वि० मूलपुस्तकादिसम्मतश्चेतिशम्॥

स्तुवे। कदा? इति, उच्यते—"सूरे" सूर्ये देवे "उदिते" सति प्रातरित्यर्थः ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
रायाहिरण्ययामतिरियमवृकायशवसे।
३ १ १ २र ३ १ २
इयंविप्रामेधसातये ॥ २ * ॥

"हिरण्यया" हित-रमणीयेन "राया" धनेन सहितया "अवृकाय" अहिंस्याय "शवसे" अस्माकं बलाय "इयम्" इदानीं क्रियमाणा "मतिः" स्तुतिर्भवत्विति शेषः ॥ [हिरण्यया—इत्यत्र सुपां सुलुगिति (७,१,३९) तृतीयैकवचनस्य याजादेशः] किञ्च हे "विप्राः" प्रज्ञाः! "इयम्" एव स्तुतिः "मेधसातये" यज्ञ-लाभाय† च भवतु ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ २
तेस्यामदेववरुणतेमित्रसूरिभिःसह।
३ २क २र
इषꣳस्वश्चधीमहि ॥ ३ ‡ ॥ ८

हे "देव वरुण!" "ते" वयं तव स्तोतारः "स्याम" समृद्धा भवेम। न केवलं वयमेव यजमानाः किन्तु "सूरिभिः"

* ऋ० वे० ५, ५, ९, ३।

† 'विप्राः—ऋत्विजः, मेधसातये—मेधालाभार्थम्'—इति वि०।

‡ ऋ० वे० ५, ५, ९, ४।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ६ ॥

## ॥ अथ नवमोऽध्याय आरभ्यते * ॥

तत्र,

शिशुञ्जज्ञानमिति प्रथम-खण्डे† तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २
शिशुञ्जज्ञानꣳ हर्यतम्मृजन्ति

३ २ ३ १२ ३ १ २ ३ १०
शुम्भन्तिविप्रम्मरुतोगणेन ।

३ २ ३ १र २ ३ १र
कविर्गीर्भिष्काव्येन‡कविःसंसत्

२र ३ २ ३ १ २ ३ १ २
सोमःपवित्रमत्येतिरेभन् ॥ १ ¶ ॥

"शिशुम्" इदानीमुत्पन्नत्वाच्छिशुवत्तिष्ठन्तम्§ [यद्वा, पापान्वित मकुर्व्वन्तं विनाशयन्तम्] "जज्ञानम्" प्रादुर्भूतम्‖ अतएव

---

* 'इदानीमष्टममध्यायत्वारिंश मुच्यते'—इति वि० ।

† "गायत्र-प्रभृति-साम्नां ब्राह्मणेनार्षेयमुक्तम्'—इति वि० ।

‡ "गोभिः काव्येन"—इति विसर्गमध्यपाठः ख० मु० पु० ।

¶ ऋ० वे० ७, ४, ९, २ ।

§ 'शिशु—शंसनीयम्'—इति वि० ।

‖ 'जज्ञानं—जायमानम्'—इति वि० ।

स्तोतृभिः ऋत्विग्भिः सह ; तथा हे "मित्र" देव ! "ते" वयं "सूरिभिः" सह "स्याम" भवेम । किञ्च "इषम्" अन्नं "स्वश्च" स्वर्गकञ्च "धीमहि" धारयामहे* ॥ ३ ॥ ८/

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

३ २उ ३ २३ २ ३ २ ३१ २ ३१ २र
भिन्धिविश्वाअपद्विषःपरिबाधोजहीमृधः ।

१ २ ३ १र २र
वसुस्पार्हन्तदाभर ॥ १† ॥

हे इन्द्र ! त्वं "विश्वाः" सर्वाः "द्विषः" द्वेष्ट्रीः शत्रुसेनाः "अप भिन्धि" विदारय । तथा "बाधः" हिंसकान् "मृधः" सङ्ग्रामान् त्वं "परि जहि" परिभावय । हे सोम वासकेन्द्र ! "स्पार्हं" स्पृहणीयं द्वेष्ट्रीणां "वसु" धनं यदस्ति "तत्" "आभर" ॥१॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १र २र ३ १ ३ १ २
यस्यतेविश्वमानुषग्भूरेर्दत्तस्यवेदति ।

१ २ ३ १र २र
वसुस्पार्हन्तदाभर ॥ २‡ ॥

हे इन्द्र ! "ते" त्वां [ विभक्ति-व्यत्ययः (३,१,८५) ] "दत्तस्य" दत्तं "भूरि" बहु "यस्य" गत् धनम् [ सर्वत्र कर्म्मणि षष्ठी वेदि-

* 'स्वः—स्वर्गलोकम्, धीमहि—चिन्तयामः'—इति वि० ।

† ऋ० आ० २, १, ४, १० ( १भा० ३१३ पृ० )=ऋ० वे० ६, ३, ४९, ४ ।

‡ ऋ० वे० ६, ३, ४९, ५ ।

"हर्य्यतं" [ हर्य्य गतिकान्त्योः ( भ्वा० प० ) ]। भृमृदृशी-त्यादिना अतच्। सर्व्वैः काम्यमानं सोमं "मृजन्ति" मरुतः* शोधयन्ति किञ्च "विप्रं" मेधाविनं सोमं "गणे न" आत्मीयेन† सप्तसङ्ख्याकेन "शुम्भन्ति" अलङ्कुर्व्वन्ति‡। ततः "कविः" क्रान्त-प्रज्ञः सोमः "काव्येन" कवि-कर्म्मणैव "कविः" शब्दयितव्यः सन् शब्दायमानः "गीर्भिः" स्तुतिभिः सह "पवित्रम्" "अत्येति" अतीत्य गच्छति॥

"विप्रम्"—इति छन्दोगाः, "वह्निम्"—इति बह्वृचाः पठन्ति॥१॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ २
ऋषिमनायऋषिकृत्स्वर्षाः

३ १ २ ३ १ २ ३ २
सहस्रनीथःपदवीष्कवीनाम् ¶।

३ २ ३ १ २ ३ १र २र ३
तृतीयन्धाममहिषस्सिषास

१ २ ३ २ ३ १ २ ३ २
न्त्सोमोविराजमनुराजतिष्टुप्॥२ §॥

"ऋषिमनाः" सर्व्वदर्शनशीलमनस्कः, अतएव "ऋषिकृत्" सर्व्वस्य दर्शनकर्त्ता प्रकाशनस्य कर्त्ता "स्वर्षाः" सर्व्वस्य सूर्य्यस्य वा

---

* 'मरुतः—आदित्यरश्मयः'—इति वि०।

† 'गणेन—सम्पातेन'—इति वि०।

‡ 'शुम्भन्ति—पावयन्ति'—इति वि०।

¶ "पदवीः कवीनाम्"—इति विसर्गमध्यपाठः ख० मु० पाठः।

§ ऋ० वे० ७, ४, ८, २।

तव्या ] "विश्व" सर्वं तद्धनम् "आनुषक्"—इति आनुपूर्व्या* सततं सर्वो मनुष्यो "वेदति" जानाति तत् "स्पार्हं" स्पृहणीयं "वसु" "आभर" ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ २ ३१र २र ३१ २
यद्वीडाविन्द्रयत्स्थिरेयत्पर्शानेपराभृतम्।
१ २ १ १र २र
वसुस्पार्हन्तदाभर ॥ ३ † ॥ ९

हे "इन्द्र!" त्वया च "वीडौ" दृढे परैः कम्पयितुमशक्ये "यत्" धनं "पराभृतं" विन्यस्तं, "यत्" च "स्थिरे" स्वयमचले पराभृतं, "यत्" च "विपर्शाने" विमर्शन-क्षमे पराभृतं, तत् "स्पार्हं" स्पृहणीयं "वसु" "आ भर" आहर॥ ३ ॥ ९

अथ तृचात्मकं चतुर्थं सूक्तम्—

तत्र, प्रथमा।

३ २ ३ २उ ३ १ ३ १ ३ १ १ ३ १ २
यज्ञस्यहित्वऋत्विजासस्नीवाजेषुकर्म्मसु।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ १ ‡ ॥

* "आनुषगिति नामानुपूर्व्वस्यानुषक्तं भवति, स्तृणन्ति बर्हिरानुषगित्यपि निगमो भवति"—इति निरु० नै० ६, १४।

† छा० आ० ३, १, २, ४ ( १भा० ४४० पृ० )=ऋ० वे० ६, १, ४९, ६।

‡ ऋ० वे० ६, ३, १०, १।

सम्भक्ताः "सहस्रनीथः" [नीथा स्तुतिः] बहुविध-स्तुतिकः "कवीनां" क्रान्त-प्रज्ञानां मध्ये "पदवीः" स्खलितानां पदानां साधुत्वेन संयोजयिता यः सोमो विद्यते स "महिषः" महान् पूज्यो वा सोमः "तृतीयं धाम" द्युलोकं "सिषासन्" सम्भक्तुमिच्छन् "स्तुप्" स्तूयमानः सन् "विराजं" विशेषेण राजन्तं दीप्यमान मिन्द्रम् "अनुराजति" प्रकाशयति ॥ २ ॥

अथ तृतीया।

३ २३ १ २३२ ३१२
चमूषच्छ्येनःशकुनोविभृत्वा

३२ ३१र २र ३१२
गोविन्दुर्द्रप्सआयुधानिबिभ्रत्।

३२ ३१र २र ३२
अपामूर्मिँसचमानःसमुद्र

३ २ ३१ २ ३१२
न्तुरीयन्धाममहिषोविवक्ति॥ ३ * ॥ १

"चमूषत्" चमन्ति भक्षयन्त्यत्रेति चम्वश्चमसास्तेषु सीदन्† यद्वा, चम्वौ अधिषवणफलके तयोर्वर्त्तमानः "श्येनः" शंसनीयः "शकुनः" शक्तः सामर्थ्यकारी "विभृत्वा" [हरतेरातोमनिन्नित्यादिना (३, २, ७४) क्वनिप्] पात्रेषु विहरणशीलः

* ऋ० वे० ७, ४, ९, ४।

† 'चमूषत्— * * *। अथवा चमूम्, सेनासु सीदति'—इति वि०।

हे "इन्द्राग्नी!" युवां "यज्ञस्य" ज्योतिष्टोमादेः "ऋत्विजा स्थः" ऋत्विजौ ऋतौ काले काले यष्टव्यौ भवथः। अतो "वाजेषु" सङ्ग्रामेषु कर्मसु यज्ञात्मकेषु च, "सस्नी" संस्नातौ शुद्धौ सन्तौ* "तस्य" तं मां हे इन्द्राग्नी! बोधतम् अथवा तस्य मम† स्तुतिं जानीतम् ॥ १ ॥

अथ द्वितीया।

२ १ २ ३ १ २ ३ १ २र

तोशासारथयावानावृत्रहणापराजिता।

१ २ ३ १ १

इन्द्राग्नीतस्यबोधतम् ॥ २ ‡ ॥

हे "इन्द्राग्नी!" "तोशासा"¶ शत्रून् हिंसन्तौ, "रथयावाना" रथेन गच्छन्तौ, "वृत्रहणा" वृत्रस्य हन्तारौ "अपराजिता" केनाप्यपराजितौ "तस्य" तं मां "बोधतम्" ॥ २ ॥

अथ तृतीया।

२ १ २ ३ १र २र ३ १ २ ३ १ २

इदंवाम्मदिरम्मध्वधुक्षन्नद्रिभिर्नरः।

१ २ ३ १ २

इन्द्राग्नीतस्यबोधतम् ॥ ३ § ॥ १०

---

* 'सस्नी—साधनस्वभावः'—इति वि०।

† 'तस्य—यजमानस्य'—इति वि०।

‡ ऋ० वे० ६, ३, २०, २।

¶ 'तोशासा—दीप्तिसम्पन्नौ'—इति वि०।

§ ऋ० वे० ६, ३, २०, ३।

"गोविन्दुः" यजमामानां गवां लम्भकः* [विन्दुरिच्छुरिति उ-प्रत्ययान्तत्वेन निपातितः] "द्रप्सः" धारयन् † "अपाम्" उदकानाम् "ऊर्मिं" प्रेरकं "समुद्रम्" [अन्तरिक्षनामैतत् (निघ० १, ३)] अन्तरिक्षं "सचमानः" सेवमानः "महिषः" महान् य एवं विधः सोमः स "तुरीयं" चतुर्थं धाम चान्द्रमसं स्थानं‡ "विवक्ति" सेवते सूर्य्यलोकस्योपरि चन्द्रमलोको विधत इति यमः पृथिव्या अधिपतिः समावत्वित्यादिभिश्चन्द्रमानक्षत्राणामधिपतिः सद्यमत्ववैचित्यन्तेर्मन्त्रैर्ज्ञायते ॥ ३ ॥ १

२ २ १ १ २
॥ पार्थम् ॥ ओ३हो३होयि। भिप्रुञ्जज्ञा। ना३उ
१ २ ३ ४ ५ २ १ २ १ २
हर्य्यं। तम्मृजन्तायि। प्रुभन्तिवायि। प्रां३मरु। तो
२ ४ ५ २ १र २ १ र १ २ ४ ५
गणेना। कविगीर्भायिः। का३विये। नाकविस्सान्।
२र १ २ १ २ २ ४
सोमःपवायि। चा३मति। आ३४३यि। ती३रा५यि
२ १ २ १ २ ३ ४ ५
भा६५६न् ॥(१) ऋषिमनाः। या३ऋषि। कृत्स्तुवर्षाः।
२ १ २ १ २ ३ ४ ५ २ र १
सहस्रनायि। था३ःपद। वीःकवीनाम्। तृतीयन्धा।

---

* 'गोविन्दः—गावः उदकं वाक् पृथिवी आदित्यरश्मयो वा। एतानि यो विन्दति स गोवित्। विदज्ञाने विदलाभे विदसत्तायाम्'—इति वि०।

† 'द्रप्सः—उदकसम्मिश्रः'—इति वि०।

‡ 'तुरीयं धाम— * * * द्रोणकलशम्'—इति वि०।

हे "इन्द्राग्नी !" "वां" युवाम् उद्दिश्य "नरः" यज्ञस्य नेतारः "अद्रिभिः" ग्रावभिः "मदिर" मदकरं "मधु" सोमात्मकम् अमृतम् "अचन्" अपूरयन् । सिद्धमन्यत् ॥ ३ ॥ १0

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

तृतीयः खण्डः* ॥ ३ ॥

---

अथेन्द्रायेन्दोमरुत्वतइति-चतुर्थखण्डे†—

तृचात्मके प्रथम-सूक्ते‡ प्रथमा ।

१ २　　३ १ २ ३ १ २ ३　२

इन्द्रायेन्दोमरुत्वतेपवस्वमधुमत्तमः ।

३ १ ३ १ २ ३ १ २

अर्कस्ययोनिमासदम् ॥ १¶॥

हे "इन्दो" सोम ! "मधुमत्तमः" अतिशयेन मधुमान् त्वम् "अर्कस्य" अर्चनीयस्य यज्ञस्य "योनिम्" स्थानम् "आसदम्" उपवेष्टुम् "मरुत्वते इन्द्राय" इन्द्रार्थम् "पवस्व" चर ॥ १ ॥

अथ द्वितीया ।

२ ३　१ २　३　२ ३ १ २　　　३ २

तन्त्वाविप्रावचोविदःपरिष्कृण्वन्तिधर्णसिम् ।

१ २　　३ १ २

सन्त्वामृजन्त्यायवः ॥ २ § ॥

---

* 'उक्तं प्रातःसवनम्'—इति वि० ।

† 'इदानीं माध्यन्दिनं सवनमुच्यते'—इति वि० ।

‡ 'इषोवृधीय-प्रभृतीनि सामानि, तेषां प्रकृतावार्षेयमुक्तम्'—इति वि० ।

¶ छ० आ० ५, २, ४, ६ ( २भा० १९ पृ० )=ऋ० वे० ७, १, ४०, १ ।

§ ऋ० वे० ७, १, ४०, २ ।

२ १ २ १ ४ ५ २र १र १ २ १
मा३महि। षःसिषासान्। सोमोबिरा। जा३मनु।
२ २ ४ २ र १ २
रा३४३। जा३ता५यिष्ट६५६॥ २) चिमूषच्छायि। ना
१ १ ३ ४ ५ २र १ २ १र
३:भ्राकु। नोविभृत्वा। गोविन्दुद्रा। प्सा३श्रायु।
२र१ ४ ५ २ १र १र १ १ र २ ३ ४ ५
धानिबिभ्रात्। अपामूर्मायिम्। सचमा। नःसमुद्रा
१ र १ र १ २ २
म्। औ३हो३होयि। तुरीयन्धा। मा३महि। पो३
२ ४
४३। वा३यिवा५क्ता६५६यि(३)॥ १२ *॥ [१]

३ ४ २
॥ महावामदेव्यम्॥ प्रा५यिप्सुम्। यज्ञा३ना३ए
४ ५ १ र र
हर्य्यताम्। मा। जन्तिप्सुम्भन्तिविप्रम्मरुतोगणेनकवि
र र र र र २ १ १ र १ १
गीर्भिःकाव्येनाकविःसन्सोमः। पा। औ३होहायि।
२ ३र र २ १ १
विश्रा२३मतायि। एत्ये। हो३। ऊम्मा २। रा५रंयि
५ ० ४ २ ४ ५
भो ३ ५ हायि॥(१) आ५विं। मना३या३ऋषिकृत्।
१ र र र र र र र
सू। वर्षाःसहस्रनीथःपदवीःकवीनांस्तृतीयन्धाममहिषः

* ऊ० गा० ९प्र० १अ० १२मा०।

हे सोम ! "तं" पवमानं "त्वा" त्वाम् "धर्णसिं" धर्त्तारं "विप्राः" प्राज्ञाः "वचोविदः" स्तोतारः* "परिष्कृण्वन्ति" अलङ्कुर्वन्ति†। अपि च "त्वा" त्वाम्" "आयवः" मनुष्याः‡ "सम्मृजन्ति" सम्यक् शोधयन्ति ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २र ३ १ २
रसन्तेमित्रोअर्यमापिबन्तुवरुणःकवे।
१ २ ३ १ २
पवमानस्यमरुतः॥ ३ ¶ ॥ ११

हे "कवे" क्रान्तकर्मन् सोम ! "पवमानस्य" चरतः "ते" तव रसं§ "मित्रः" "अर्यमा" च "वरुणः" च "मरुतः" च एते सर्वे देवाः "पिबन्तु" ॥ ३ ॥ ११

२ र र १
॥ इषोवृधीयम् ॥ इन्द्रायेन्दाउ। मरुत्वतायि।
२ १ १ २ १ १ र
पवस्वामा२। धुमत्तमाः। अर्कस्यायो२। निमा।
१ २ ५र र २ र र १
स्यार्दा२३४औहोवा ॥(१) तन्त्वाविप्राः। वचोविदाः।

---

* विप्रा वचोविदः—मेधाविनः ऋत्विजः'—इति वि०।

† 'परिष्कृण्वन्ति—परिचरन्ति'—इति वि०।

‡ 'आयवः"—इति मनुष्य-नामासु सप्तदशं नैघण्टुकम् (२, ३)।

¶ ऋ० वे० ७, १, ४०, ४।

§ 'रसं वीर्यम्'—इति वि०।

र र १ १ १ र २ १र २

सिषासन्सोमः। वा। औ३होहायि। राजा२३मनू।

३र र २ १ १ २ ३

राजौहो३। ऊम्मा२। ता॒ऽ२यिष्टो३५हायि॥(२) चा

र ४ २ ४ ५ १ र र

ऽ५मू। षच्छ्रा३यिना३:शकुनाः। वायि। भृत्वागोवि

र र र र र २ १र

न्दुर्द्रप्सआयुधानिबिभ्रदपामूर्म्मिं सचमानःसमुद्रन्तुरी।

२ ३ २ १र २ ३र र १

या। औ३होहायि। धामा२३महायि। पोवौहो३।

१ १ १

ऊम्मा२। वाऽ२क्तो३५हायि(३)॥ ७ *॥ [२]

२

॥ हाउउऊवायिवासिष्ठम्॥ हायि। उऊवायि।

२ २ ३र ४र ५ १ २ १ २ ३ ४ ५

शिशा३४औहोवा। जज्ञा। ना३ हर्य्यं। तम्मृजन्ता

३ २ ३र ४र ५ १ २ १ २

यि। शुम्भा३४औहोवा। तिवायि। प्रा३म्मरु। तो

३ ४ ५ ३ २ ६र ५र ५ १र २ १ र

गणेना। कवा३४औहोवा। गीर्भायिः। का३विय।

२ ३ ४ ५ ३र २ ३र ४र ५ १ २

नाकविःसान्। सोमा३४औहोवा। पवायि। त्रा३

१ २ २ ४ ३ २

मति। आ३४३यि। तो३रा५यिभा६५६न्॥(१) ऋषा

* ऊ० गा० १०प्र० १अ० ७मा०।

२ १ १ २ र १ १
परिष्क्राण्वा २। निधर्णसायिम्। सन्त्वामाज्जा २। ति
र ३ ५र र १र र
आ। यार्२वार ३४ औहोवा ॥(२) रसन्तेमायि। त्रो
१ २ १ १ २ १
अर्य्यमा। पिबन्त्ववा २। रुणःकवायि। पवमाना २।
१ १ ५र र १ र २
स्यम। रूरता२३४औहोवा। इषोवृधे१(३) ॥ १८ * ॥ [१]
२ र र १ ५ १
॥ गायत्रीक्रौञ्चम् ॥ इन्द्रायेन्दा१औहो। मा ३ रु
३ ५ १ २१ २ ५ १ ३ ५
त्वा२३४तायि। पावस्वामा। धूइम। ता २ ३ ४माः।
१ ५ २ ५ १ र
माः। पवस्वमधुमा३२। ता२३४माः। अर्कस्ययोना२
४ ५ १ ५र
३यिम। अ। वाहायि। सा२३४दाम्। एहियाइ
५ २ र २ ५ २ ३ ५
हा ॥(१) तन्त्वाविप्रा १ औहो। वा३। चो। वी२३४दाः।
१ २ १ २ २ ३ ५ १
पारिष्क्राण्वा। ता३यिधा। णा२३४सायिम्। परिष्क
५ ३ ५ १ र
ण्वन्तिधा३२। णा२३४सायिम्। सन्त्वामृजन्ता२३यि।
४ ५ १ ५र ५ २
अ। वाहायि। या२३४वाः। एहियाइहा ॥(२) रस

* ऋ० गा० ३ प्र० १ ख० १९ सा०।

३र ४र ५ १ २ १ २ ३ ४ ५ २
३४औहोवा । मनाः । या३ऋषि । कृत्सुवर्षाः । स

२ ३र ४र ५ १ २ १ २ ३ ४ ५
हा३४औहोवा । मनायि । या३:पद । वीःकवीनाम् ।

३ २ ३र ४र ५ १ २ १ २ ३ ४ ५
तृता३४औहोवा । यन्धा । मा३महि । षःसिषासान् ।

३र २ ३र ४र ५ १ २ १ २ २
सोमा३४औहोवा । विरा । जा३मनु । रा३४३ । जा

४ ३ २ ३र ४र ५ १
३ताप्रयिष्टू ६५६प् ॥(२) चमू३४औहोवा । षक्त्रायि ।

२ १ २ ३ ४ ५ ३र २ ३र ४र ५ १
ना३:शकु । नोविभूत्वा । गोवा३४औहोवा । दुद्री ।

२ १र २र १ ५ ३ २ ३र ४र ५ १
प्सा३आयु । धानित्रिभ्रात् । अपा३४औहोवा । ऊ

२ १ र २ ३ ४ ५ २
र्मायिम् । सचमा । नःसमुद्राम् । हायि । उरुवा

३ २ ३र ४र ५ १ २ १ २
यि । तुरा३४औहोवा । यन्धा । मा३महि । षो३४

२ ४
३ । वा३यिवा५क्ता६५६यि(३) ॥ ७ * ॥ [३]

३ २ ३ २ ३र
॥ उरुवायियासिष्ठम् ॥ उरुवायि । शिशा३४औ

४र ५ १ २ १ २ ३ ४ ५ १ २
होवा । जज्ञा । ना३०दर्घ्य । तंमृजन्तायि । प्रभा

---

* ऊ० गा० १७प्र० १अ० ७सा० ।

र २ ऽ २ ३ ५ १ २ १ २ ऽ २
न्तेमा१औहो। त्रो३अर्या२३४मा। पायिबन्तुवा। रू३णः।
३ ५ १ ४ २ ५ १
का२३४वायि। पिबन्तुवरुणा३२ः। का२३४वायि। पव
र ४ ५ १ ५र
मानस्या२३। म। बाहायि। रू२३४ताः। एह्यिया६
५ ४
हा। हो५ई। डा(३)॥ २० *॥ [२]

२ र ३ १ ३
॥ वाजदावद्दावयम्॥ इन्द्रायेन्दाउ। मरू२त्वा२३
५ १ ३ ५ २ १ १ २
४तायि। पवा२स्वा२३४मा। धमत्ता२माः। आ२३र्का।
१ २ १ ५ ४ ५ १ र
स्या२यो। निमो२३४वा। सा५दो६हायि॥(१) तन्त्वा
१ ३ ५ १ ३ ५
विप्राः। वचो२वी२३४दाः। परा२यिष्का २ ३ ४ एर्वा।
२ १ १ २ १ २ १
तिधर्णा२मायिम्। सा२३न्त्वा। मा२र्जा। तियो२३४
५ ४ ५ २ र १र ३
वा। या५वो६हायि॥(२) रसन्तेमायि। चो आ२र्या
५ १ ३ ५ २ १ १ २
२३४मा। पिबा२न्तू२३४वा। रुणःका२वायि। पा२३वा।
१ २ १ ५ ४ ५
मा२ना। स्यमो२३४वा। रू५तो६हायि(३)॥ २१ †॥[३].

* ऊ० गा० ३प्र० १ख० १०सा०।
† ऊ० गा० ३प्र० १अ० ११सा०।

३र ४र ५ १ २ १ २ ३ ४ ५ २
३४औहोवा । तिवायि । प्रा३म्मरु । तोगणेना । क

२ ३र ४र ५ १र २ १ र २ ३ ४ ५
वा३४औह्वोवा । गौर्भायिः । का३विये । नाकविःसा ।

३र २ ३र ४र ५ १ २ १ २
न । सोमा३४औह्वोवा । पवायि । त्वा३मति । आ

२ ४ २ २ ३र ४र ५
३४३यि । ती३रा५यिभा६५६न् ॥(१) ऋपा३४औहोवा ।

१ २ १ २ ३ ४ ५ ३ २ ३र ४र ५
मनाः । या३ऋषि । कृत्सुवर्षाः । सद्दा३४औहोवा ।

१ २ १ २ ३ ४ ५ ३ २ ३र ४र
सनायि । था३ःपद । वीःकवीनाम् । तृता३४औह्वो

५ १ १ २ ३ ४ ५ ३र २
वा । यन्धा । मा३महि । षःसिषासान् । सोमा ३ ४

३र ४र ५ १ २ १ २ २ ४
औह्वोवा । विरा । जा३मनु । रा३४३ । जा२ला५

३ २ ३र ४र ५ १ २
यिष्ट्६५६प् ॥(२) चमू३४औहोवा । पच्छुरायि । ना

१ २ ३ ४ ५ ३र २ ३र४र ५ १
३ःशकु । नोविभृत्वाम् । गावा३४औहोवा । दुद्री ।

२ १र २र ३ ४ ५ ३ २ ३र ४र ५ १र
प्सा३आयु । धानिबिभ्रात् । अपा३४औहोवा । ऊ

२ १ र २ ३ ४ ५ ३ २ २
र्म्मायिम् । सचमा । नःसमुद्राम् । उक्ष्वायि । तु

॥ आश्वसूक्तम्॥ आ३औहोवाहायि। इन्द्रायेन्दा

उ। मरू। त्वते। ऐहोयेहो१। पावस्वमधुमात्तमः।

ऐहोयैहो१। आ२यि। आर्का२स्यायो२। निमा।

सा२दा२३४औहोवा॥(१) आ३औहोवाहायि। तन्त्वा

विप्राः। वचो। विदः। ऐहोयैहो१। पारिष्कृण्वन्ति

धार्णसिम्। ऐहोयैहो१। आ२यि। सान्त्वा२मार्जा

२। तिआ। या२वा२३४औहोवा॥(२) आ३औहोवा

हायि। रसन्तेमायि। त्रोआ। यमा। ऐहोयहो१।

पायिबन्तुवरुणाःकवे। ऐहोयैहो१। आ२यि। पावा

२माना२। स्यम। रू२ता२३४औहोवा। प्रुक्‌आङ्

ता२३४५ः(३)॥ ४ *॥ [४]

॥ आमहीयवम्॥ इन्द्रायाइयिन्दोमरुत्वतायि। पवा

* ऊ० गा० ८प्र० १अ० ४मा०।

रा३४औहोवा। यन्धा। मा३मह्नि। षो३४३। वा
३यिवा५ क्का६५६यि(३)॥ १८ *॥ [४]

॥ उद्वद्भार्गवम्॥ अभ्रुञ्जा ज्ञार२३। न ह्वय्यीता
२३म्। मृजन्तायि। प्रुभ्मन्तायिवा२३यि। प्रम्मरूतो
२३। गणेना। कविर्गीयिभी२३यि:। काविर्येना२३:।
कवि:सान्। सोम:पावा२३यि। ऋमतायिये२३। ति
रेभा३नाउ॥(१) ऋषिमाना२३। ओयऋषीकृ२३त्।
सुवर्षा:। सहस्राना२३यि। थ:पदावा२३यि:। कवी
नाम्। तृतीयान्धा२३। ममह्वायिषा२३:। सिषासा
न्। सोमोवायिरा२३। जमनूरा२३। जतिष्ठा३१उ॥(२)
चमूषाष्टया२३यि। न:शकूनो२३। विभृत्वा। गोवि
न्दूर्द्रा२३। पमच्चायूधा२३। निबिभ्रात्। अपामूर्म्मी

* ऊ० गा० १प्र० १अ० ८सा०।

स्वा१मा२। धुमा२३त्तमाः। अर्कस्ययो। निमा२३स
दाउ। वा३। स्तौषि३४५(१) ॥ ४ * ॥ [५]

॥ दार्ढच्युतम् ॥ इन्द्रा। इहा। येन्दोमह२त्वता
यि। इहा। पवा। इहा। स्वमधुमा२त्तमाः। इ
हा। अर्का। इहा। स्ययोनिमा२सदाम्। इहा१ ॥(१)
तन्त्वा। इहा। विप्रावचो२विदाः। इहा। परायि।
इहा। कृण्वन्तिधा२र्णासायिम्। इहा। सन्त्वा। इ
हा। मृजन्त्यिआ२यवाः। इहा१ ॥(२) रसाम्। इ
हा। तेमित्रोआ२र्य्यमा। इहा। पिबा। इहा। तु
वरुणा२ःकवायि। इहा। पवा। इहा। मानस्यमा
२रुताः। इहा१(३) ॥ १३ † ॥ [६]

* ऋ० गा० १०प्र० २ख० ४सा०।

† ऋ० गा० १६प्र० १ख० १३सा०।

२ १ २ १ २र १
२३यिम्। सचमाना२३ः। समुद्राम्। तुरीयान्धा२३।
ममहायिषो२३। विवक्ता३१उवा२३४५(३) ॥ ४ * ॥ [५]

२र र २
॥ वैश्वज्योतिराद्यम् ॥ हाउहोवा३हायि। शिशुञ्ज

र १ ७ १ १ २ १ २
ज्ञानांᳫ हर्य्या३तांमृजन्ता२३४५यि। शुम्भन्तिविप्रम्मरु

१ ७र १ १ १ १ २ र र १ ७ १ १ १ १
३तोगणेना२३४५। कविर्गीर्भिःकाव्ये३नाकविःसा२३४५

२र १ ७र १ १ १ १ २
न्। सोमःपवित्रमती३यायिनिरेभा२३४५न् ॥(१) ऋषि

र १ ७ २ र १
मनायऋषी३कृत्स्वर्षा२३४५ः। सहस्रनीथःपदा३वायिः

७र १ १ १ १ २ र १ ७र १ १ १ १
कवीना२३४५म्। तृतीयन्धाममही३षाःसिषासा२३४५

२र र र १ ७ १ १ १ १ २र र
न्। सोमोविराजमनू३राजतिष्टू२३४५प् ॥(२) चमूषच्छ्ये

१ ७ १ १ १ १ २र र १ ७
नःशकूनोविभृत्वा२३४५। गोविन्दूर्द्रप्सआयू३धानिवि

१ १ १ १ २ र र २र१ ७ १ १ १ १
भ्रा२३४५त्। अपामूर्म्मिᳫसचमा३नाःसमुद्राम्३४५म्।

---

* ऊ० गा० २३प्र० २अ० ४मा०।

२ र र र र १ ०
॥ वारवन्तीयोत्तरम् ॥ इन्द्रायेन्दाऔहोहायि। मा
२ १ २१ ५ २१ २
रुत्वा२३४तायि। पवाख्वा२३४हायि। मधुमत्ता ३ ४।
३र ४र ५ १ ३ ५ २ २ ५ १ १ २
आहोवा। इहा२३४हायि। उऊवा२३४माः। अर्कस्य।
१ ७ र २ ३र ४र ५ १ २ ५ ३र २
योनिमासा३४। औहोवा। इहा२३४हायि। औहो
५र ५ २ र र र १
३१२३४। दाम्। एहियाईहा॥(१) तन्त्वाविप्राऔहो
२ २ ५ २१ ५ १
हायि। वाचोवी२३४दाः। परायिष्का२३४हा। एवन्ति
२ ३र ४र ५ १ २ ५ २ २ ५
धर्णा३४। औहोवा। इहा२३४हायि। उऊवा२३४सोम्।
२ १ २ १ ० र २ ३र ४र ५ १ ३
सन्त्वाम्र। जान्तिआया३४। औहोवा। इहा २ ३ ४
५ ३र २ ५र ५ २
हायि। औहो३१२३४। वाः। एहियाईहा॥(२) रस
र र र १ २ ३ ५ २१
न्तोमा। औहोहायि। त्वोअर्घ्या२३४मा। पिबातू२३
५ १ २ ३र ४र ५ १ ३ ५
४हायि। वरुणःका३४। औहोवा। इहा२३४हायि।
२ ३ ५ २११र ० १ ७ २ ३र ४र ५
उऊवा२३४वायि। पवमा। नास्यमरु ३४। औहोवा।

२ र र ३र १ ७ १ १ १ २ २र र २
तुरीयन्धाममह्योऽ३षोविवक्ता२३४५यि । हाउहोवा३हायि ।
१ १ १
वा३४५(३) ॥ ७ ॥ * [६] १

एतेसोमा इति नवर्चं द्वितीयं सूक्तं,

तत्र प्रथमा ।

३ १र २र ३ २ ३ १र २र २ १ २
एतेसोमाअभिप्रियमिन्द्रस्यकाममक्षरन् ।
१ २ ३ २क २र
वर्द्धन्तोअस्यवीर्यम् ॥ १ † ॥

"एते" अभिषुता इमे सोमाः "अस्य" इन्द्रस्य "वीर्य्यं" शक्तिं "वर्द्धन्तः" वर्द्धयन्तः "इन्द्रस्य" "कामं" काम्यं "प्रियं" प्रीतिकरं "समभ्यक्षरन्" अभ्यवर्षन् अभिपवन्ते ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
पुनानासश्चमूषदोगच्छन्तोवायुमश्विना ।
१ २ ३ १ २
तेनोधत्तसुवीर्यम् ॥ २ ‡ ॥

हे सोमाः ! "पुनानासः" पुनाना अभिषूयमाणाः "चमूषदः"¶ चमसेषु सीदन्तः गच्छन्तः "वायुम्" "अश्विना" अश्विनौ च

---

* ऊ० गा० २३प्र० २अ० ७सा० ।

† ऋ० वे० ६, ७, ३०, १ । ‡ ऋ० वे० ६, ७, ३०, २ ।

¶ 'चमूषदः'—भक्षणीयेषु सीदन्ति अथवा अधिषवणफलकचर्मणि उपरि सीदन्ति चमूषदः'—इति वि० ।

१ ३ ५ ३र २ ५र ५
इहा२३४हायि । औहो३१२३४ । ताः । एहियाइ्हा ।
४
हों५ई । डा(३) ॥ १६ * ॥ [७]

१ २र १ र २ र १ २ १
॥ इहवद्वामदेव्यम् ॥ तन्त्वाविप्रावचोविदः । इहा ।
१ २ १ र
परिष्कृण्वन्तिधर्णसा२यिम् । इहा । सन्त्वामृजन्ता२
१ २ १ ५ ५
यि । इहा३ । या२३४वो६हायि(२) ॥ १८ † ॥ [८]

२ र १ २ १ ३र
॥ मार्गीयवाद्यम् ॥ रसोहोवा । तेमा२यि । त्रो
२ ३ ५ १ २ १ २ १ र
अर्य्या२३४मा । पिबन्तुव । रुणाःका१वा२यि । पव ।
२ २ २ ५ १ ३ ५र र २
औ३होंयि । मा२३४ना । स्या२मा२३४औहोवा । ए३ ।
१ १ १ १ १
हुता१२३४५ः(३) ॥ २० ‡ ॥ [९] ११

* ऊ० गा० २२प्र० २ख० १६मा० ।
† ऊ० गा० २२प्र० १ख० १९मा० ।
‡ ऊ० गा० २२प्र० १ख० २०मा० ।

"गच्छन्तः" प्राप्नुवन्तः ते यूयं "नः" अस्मभ्यं "सुवीर्य्यं" शोभन-वीर्य्यं "धत्त" प्रयच्छत ॥

"धत्त"-"धान्तु"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ २ १ २ २ १र २र

इन्द्रस्यसोमराधसेपुनानोहार्द्दिचोदय।

३ २ ३ १ २ ३ १ २

देवानांयोनिमासदम्॥ ३* ॥

हे सोम! "पुनानः" पूयमानस्त्वं "राधसे इन्द्रस्य" इन्द्रस्य संराधनाय "हार्द्दि"—इति हृदय-सम्बन्धि स्थानं† "चोदय" प्रेरय। अहमपि "देवानाम्" इन्द्रादीनां "योनिं" स्वर्गाख्यं स्थानम् "आसदं" प्राप्तवान् [यद्वा, देवानां यजन-साधनं यज्ञाख्यं स्थानं प्राप्तवानस्मि ॥

"देवानाम्"-"ऋतस्य"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी।

२ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २

मृजन्तित्वादशक्षिपोहिन्वन्तिसप्तधीतयः।

२ ३ १ २

अनुविप्राअमादिषुः॥ ४‡ ॥

---

* ऋ० वे० ९, ७, ३०, ३।

† 'हार्द्दि—हृदये'—इति वि०।

‡ ऋ० वे० ९, ७, ३०, ४।

मृज्यमानेति-प्रगाथात्मकं द्वितीयं सूक्तम्*—

तत्र प्रथमा ।

३ १ २ ३ १र २र
मृज्यमानःसुहस्त्यासमुद्रे वाचमिन्वसि ।
३ २ ३ १ २ ३ १ २र ३ २ ३ १ २ ३क २र
रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्पवमानाभ्यर्षसि ॥१†॥

हे "सुहस्त्या" [हस्ते भवा हस्त्या अङ्गुलयः] शोभनाङ्गुलिक सोम ! "मृज्यमानः" शोध्यमानः त्वं "समुद्रे" अन्तरिक्षे कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि । किञ्च हे "पवमान" पूयमान सोम ! "पिशङ्गं" हिरण्यैः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिं" धनम् "अभ्यर्षसि" स्तोतृणामभि चरसि प्रयच्छसि ॥ १ ॥

अथ द्वितीया ।

२ ३उ ३ १ २ ३ २ ३ १ २ ३ १ २
पुनानोवारेपवमानोअव्ययेवृषोअचिक्रदद्वने ।
३ १ २ ३ १र २र ४ १
देवानाᳫंसोमपवमाननिष्कृतङ्गोभिरञ्जानो
२
अर्षसि ॥ २ ‡ ॥ १२

* 'बृहती, चौऽत्वणोरञ्च प्रभृतीनि ब्राह्मणोक्तानि'—इति वि० ।
† ऋ० आ० ६, १, ७, ७ ( २भा० ३९७पृ० )=ऋ० वे० ७, ५, १६, १ ।
‡ ऋ० वे० ७, ५, १६, २ ।

हे सोम! "त्वा" त्वां "दश" दशसङ्ख्याकाः [ "क्षिपः अङ्गुलिनामैतत् ( २, ५, ३, ) ] अङ्गुलयः "मृजन्ति" शोधयन्ति। ततः "सप्त" सप्तसङ्ख्याकाः* "धीतयः" होत्रकाश्च त्वां "हिन्वन्ति" स्व-स्व-व्यापारैः प्रीणयन्ति। तथा "विप्राः" मेधाविनः स्तोतारश्च त्वाम् "अनु अमादिषुः" अनुमादयन्ति ॥४॥

अथ पञ्चमी।

३ १ २ ३ १ २ ३१ २ ३ १ २र ३क २र
देवेभ्यस्त्वामदायकꣳसृजानमतिमेष्यः।

१र २र
सङ्गोभिर्वासयामसि ॥ ५ † ॥

हे सोम! "कं" सुखभूतं "त्वा" त्वां "देवेभ्यः" देवानां "मदाय" मदार्थं "गोभिः" गोविकारैः पयोभिः "संवासयामः" संस्थापयामः। कीदृशम्? "मेष्यः" अवेर्लोमानि दशापवित्र रूपेण "अति सृजानम्" अत्यन्तं सृजन्तं दशापवित्ररूपेषु अवेर्लोमसु वर्त्तमानमित्यर्थः ॥ ५ ॥

अथ षष्ठी।

३ १ ३ २ ३ १र २र ३ १र २र
पुनानःकलशेष्वावस्त्राण्यरुषोहरिः।

२उ ३ १ २
परिगव्यान्यव्यत ॥ ६ ‡ ॥

* 'सप्तधीतयः—बुद्धियुक्ताः सप्तर्त्विजः,' धीतयः स्थापनकराः'—इति वि०।

† ऋ० वे० ६, ७, ३०, ५।

‡ ऋ० वे० ६, ७, ७०, ६।

"अयं" सोमः "वृषः" वृषभसदृशः* सन् "पुनानः" अभिषूयमाणः सर्वं शोधयतु "अव्यये" अविमये "वारे" वाले पवित्रे "पवमानः" पूयमानः सन् "वने" वननीये, "उदके" काष्ठे कलशे वा† "अचिक्रदत्" शब्दमकरोत्। [अथ प्रत्यक्षवादः] हे "सोम। पवमान!" त्वं "गोभिः" गव्यैः क्षीरादिभिः‡ "अञ्जानः" अञ्जमानः¶ सन् "निष्कृतं" संस्कृतं§ देवानां स्थानम् "अर्षसि" गच्छसि ॥ २ ॥ १२

॥ औद्दणोरन्ध्रम् ॥ मृ१ज्य२रमानाः। सुहस्तियाऽ३। मा१मृ२३द्रा४यिवा५। च२मिन्वसाऽ३यि। रा१यो२३स्पा४यिशा५। गम्व२ऊलाऽ३म्। पू१रू३रस्पृ२३४हा५म्। पवमा१। ना२र। औ१ऽ३हो२। भियो२३४वा३। पा४५मोऽ६हायि५ ॥ (१) पवमाना२र। भियर्षसाऽ३यि। पा१वा२ऽ३मा४ना५। भियर्षसाऽ३यि२। पू१ना२ऽ३

---

* 'वृषा उ इति पदपूरणः' —इति वि० सम्मतश्चैष छेदः पदकारस्य तथाहि— "वृषा१२र। उ३"—इति।

† 'वने—काष्ठमये द्रोणकलशे अथवा वने उदके मध्ये भूते'—इति।

‡ 'गोभिः—उदकैः अथवा गो-सम्भूतैः क्षीरैः'—इति वि०।

¶ 'अञ्जानः—मिश्रीयमाणः'—इति वि०।

§ 'निष्कृतं स्थानम'—इति वि०।

"पुनानः" पूयमानः "कलशेषु" द्रोणकलशेषु* आसिच्यमानः "अरुषः" आरोचमानः "हरिः" हरितवर्णः सोमः "गव्यानि" गो-सम्बन्धीनि पयःप्रभृतीनि "वस्त्राणि" वासांसि "परि अव्यत" पर्य्याच्छादयति† ॥ ६ ॥

अथ सप्तमी।

३ २ ३ १ २ ३ २३ ३ २ ३ १ २
मघोनआपवस्वनोजहिविश्वाअपद्विषः।
२ ३ १ २ ३ १ २
इन्दोसखायमाविश ॥ ७ ‡ ॥

हे "इन्दो" सोम! "मघोनः" धनवतः "नः" अस्मान् "आ" आभिमुख्येन "पवस्व" चर "विश्वा" विश्वान् "द्विषः" द्वेष्टॄन् "अप जहि" मारय च "सखायं" मित्रभूतमिन्द्रम् "आविश" प्राप्नुहि ॥ ७ ॥

अथाष्टमी।

३ १ २ ३१२ २२ ३ १ २
नूचत्त्मन्त्वावयमिन्द्रपीतꣳस्वर्विदम्।
३ १ २ ३१२ २
भक्षीमहिप्रजामिषम् ॥ ८ ¶ ॥

---

* 'कलशेषु कलशसम्बन्धिषु ग्रहचमसादिषु'—इति वि०।

† 'अव्यत—गमय'—इति वि०।

‡ ऋ० वे० ६, ७, ३१, १।

¶ ऋ० वे० ६, ७, ३१, २।

नोवा। रेपवमा३। नोआरव्या२३४यायि। वृषोअ।
चा। औ३हो। क्रदो२३४वा। वा५नो६हायि॥(२)
वृषोअचायि। क्रदद्दना३यि। वार्षो३आचायि। क्रद
द्दना३यि। दायिवा३नाऽसो। मपवमा३। नना२यि
ष्का२३४र्त्ताम्। गोभिर। जा। औ३हो। नओ२३
४वा। षा५सो६हायि(३)॥१*॥[१]

॥स्वारेडमौक्षोरन्ध्रम्॥ मृज्यमानःसुहस्त्या। समु
द्रे वोवा। चामिन्वमि। रायिम्पिशा३। हा३हा।
गम्बहुलम्पुरुस्पृहम्। पवमाना३। हा३हा। भियर्षा
२३३यि॥१) पवमानाभियर्षसि। पवमानोवा। भाय
र्षसि। पुनानोवा३। हा३हा। रेपवमानोअव्यये।
वार्षोअचा३यि। हा३हायि। क्रदद्दा२३ना३४३यि॥(२)

* ऋ० गा० ३प्र० १अ० १सा०।

हे सोम! "नृचक्षसं" नृणां द्रष्टारं "स्वर्विदं" सर्वज्ञम्* "इन्द्रपीतं" त्वां सेवमाना वयं "प्रजां" पुत्रादिकाम् "इषम्" अन्नञ्च "भक्षीमहि" भजेम॥ ८॥

अथ नवमी।

३ २ ३ १र २र ३ १ २ ३ १र २र
वृष्टिन्दिवःपरिस्रवद्युम्नम्पृथिव्याअधि।
१ २ ३ १ २
सहोनःसोमपृत्सुधाः॥ ९ † ॥ २

हे "सोम!" त्वं "दिवः" द्युलोकात् "वृष्टिं" वर्षं "परिस्रव" परितो वर्ष, "पृथिव्या अधि" [अधीति सप्तम्यर्थानुवादो] "द्युम्नम्" अन्नञ्च उत्पादयेति शेषः। "नः" अस्माकं‡ "सहः" बलं "पृत्सु" सङ्ग्रामेषु "धाः" धेहि॥ ९॥ २

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य प्रथमः खण्डः॥ १॥

---

* 'स्वर्विदं—स्वर्गस्य वेत्तारम्'—इति वि०।

† ऋ० वे० ६, ७, ३१, ३।

‡ 'नः—अस्मभ्यम्'—इति वि०।

१ र २ १ र २र १२ १ २र १
वृषोअचिक्रदद्वने। वृषोअचोवा। क्राद्दने। दायि
र र २ २ २ १ २र १ र
वानाᳲसो३। वा३वा। मपवमाननिष्कृतम्। गोभा
२ १ १ र ५ २ २
यिरज्ञा३। वा३वा। नोअर्षा२३सा३४३यि। ओ२३
४५ई। डा(३) ॥ २ * ॥ [२]

१ १ र २ १ १
॥ वाजजित् † ॥ मृज्यमानःसुहा। स्तिया२। समू
१ र १ २र १ १
२हो। द्रेवा२हो। चामिन्वसायि। रया२यिᳲहो
१ २ १ २र १
यि। पिशा२हो। गम्वङ्कलाम्। पूरुस्पृहाम्। पवा
१ र १ २र १ २ १ २र
२हो। माना२हो। भीयर्षसा३१उवा२३ ॥(१) पवमा
र १ १ १ र २र
नामिया। षसा२यि। पवा२हो। माना२हो। भी
१ १ र १ २र१ २र
यर्षसायि। पुना२हो। नोवा२हो। रेपवमा। नो
१ १ १ २र १
अव्ययायि। वृषो२होयि। अचा२यिहोयि। क्राद
२ १र २ १
द्वना३१उवा२३ ॥(२) वृषोअचिक्रदात्। वना२यि।

---

* ऊ० गा० ३प्र० १ख० २सा०।

† "बार्हद्राजजिदोल्लणोरम्भम्"—इति ख० पु० पाठः।

अथ द्वितीये खण्डे—

सोमःपुनानइति नवर्चं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २

सोमःपुनानोअर्षतिसहस्रधारोअत्यविः।

३ १र २र ३ २

वायोरिन्द्रस्यनिष्कृतम् ॥ १ * ॥

अयं "पुनानः" पावकः "सोमः" अर्षति" गच्छति। कीदृशोऽयम्? "सहस्रधारः" अपरिमितधारः "अत्यविः" अवि-शब्देन तल्लोमान्युच्यन्ते; अवेर्लोमभिर्निष्पादितं दशापवित्र मित्यर्थः, तदतिक्रम्य गच्छतीत्यत्यविः। किमर्थम्? "वायोः" "इन्द्रस्य" च पानायेति शेषः। किम्प्रति? "निष्कृतम्" [ निरित्येषः समित्येतस्मिन्नर्थे ] संस्कृतं पात्रं प्रति ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १र २र

पवमानमवस्यवोविप्रमभिप्रगायत।

३ २ ३ १ २

सुष्वाणन्देववीतये ॥ २ † ॥

हे "अवस्यवः" रक्षण-कामाः! उद्गात्रादयो यूयं "पवमानं" शोधकं "विप्रं" विशेषेण देवानां प्रीणयितारं विप्रवद्बुद्धं वा

* ऋ० वे० ६, ८, १, १।

† ऋ० वे० ६, ८, १, २।

१ १ १ २र१ १ र
वृषो२ह्रोयि। अचा२यिह्रोयि। क्रादद्दनायि। द्वेवा
१ र १ ११ १र१ र
२ह्रो। ना९सो२ह्रो। मपवमा। नानिष्कृताम्। गो
१ १ १र१. १
भा२यिर्ह्रोयि। अच्छा२ह्रो। नोअर्षसा३१उवा२३।
२र१र १ २
वाजीजिगी३वा९१(३) ॥ ३ * ॥ [३]

१ र १ १ १ २ १
॥ वरुणसाम ॥ मृज्यमानःसुहस्त्योवा। ओवा। सा
२ र र १ २ १ १ १
मुद्रेवा। चमायिन्वा१सो२। रा२३यीम्। पा२३यि
१ १ ११ २ १ऽ १ १
ष्टा। गम्बहुलम्। पुरु२३हायि। स्पृहा३मा। पव
२रर १ २ १ १ १र १ऽ २
मानाभियर्षसि। पा२३वा। मानाभियौ३। हो३हो२३
५ ४ ५ १ र र १ २
४। वा। षा५सो६हायि॥(१) पवमानाभियर्षसोवा।
१ १ १ १र र १ २ १ १
ओवा। पावमाना। भियार्षा१सा२यि। पू२३ना।
१ २ १र २ र १र २ १ ४ १
नो२३वा। रेयवमा। नोआ२३हायि। व्यया३आ।
१र २ ११र १ १ १ २ ऽ १
वृषोअचिक्रदद्दने। वा२३र्षो। आचिक्रदौ३। हो३१२३

* ऊ० गा० ३प्र० १अ० ३सा०।

[अथवा विप्रइति मेधावि नामसु (निघ० ३,१५,१) मेधाविनम्] "देववीतये" देवपानाय* "सुवाणम्" अभिषूयमाणं सोमम् "अभि" आभिमुख्येन "प्रगायत" प्रकर्षेण स्तुत ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २र ३ १ २

पवन्तेवाजसातयेसोमाःसहस्रपाजसः।

३ २ ३ १ २

गृणानादेववीतये ॥ ३ † ॥

"पवन्ते" क्षरन्ति "सोमाः"। किमर्थम्? "वाजसातये" अन्नस्य लाभाय। कीदृशाः? "सहस्रपाजसः" बहुबलाः नृणां बलप्रदा इत्यर्थः‡ "गृणानाः" [कर्मणि कर्त्तृप्रत्ययः (३,१,८५)] स्तूयमानाः। पुनः किमर्थम्? "देववीतये" [देवानां वीतिर्गतिः प्राप्तिलक्षणं वा यस्मिन् स देववीतिः] यज्ञः, तदर्थम् [यज्ञसिद्धिः साक्षात् प्रयोजनं तद्द्वारा वाज-लाभइति ॥ ३ ॥

अथ चतुर्थी।

३ २ ३ १ २ ३ १ २ ३ १र २र

उतनोवाजसातयेपवस्वबृहतीरिषः।

२ १ २ ३ १ २

द्युमदिन्दोसुवीर्यम् ॥ ४ ¶ ॥

---

* 'देववीतये—देवानां भक्षणाय'—इति वि०।

† ऋ० वे० ६, ८, १, ३।

‡ 'सहस्रपाजसः—सहस्र-पान-समर्थाः'—इति वि०।

¶ ऋ० वे० ६, ८, १, १।

५ ४ ५ १र १ १
४। वा। षा५नोर्६हायि ॥(२) वृषोअचिक्रदद्वनोवा।
१ १ १र २ १ २ १ १
औवा। वार्षोअचि। क्रदाद्दा१ना२यि। दा२३यिवा।
१ २ १ २र १ १ १ ऽ २
ना२३४सो। मपवमा। नजा२३हायि। क्रता३मा।
र १ र १र १ १ १ १ र २ ऽ
गोभिरञ्जानोअर्षसि। गो२३भायिः। आञ्जानऔ३।
२ १ ५ ४ ५
होइहो२३४। वा। षा५सोर्६हायि(३) ॥ ४ * ॥ [४]

२ऽ ऽ ऽ १ र
॥ अङ्गिरसाङ्गोष्ठम् ॥ हाउहाउहाउवा। मृज्यमा
२ १र १ १ १ १ १ १ १ र र
नःसुहस्त्या। इहा। उपा२३४५। समुद्रेवाचमिन्व
१ ३ १ १ १ १ १ १ १ १ १ १ १ १
सि। इहा। उपा२३४५। रयिम्पिशङ्गम्बहुलंपुरुस्पृ
२ १ २ १ १ १ १ १ २र र १ १ १
हम्। इहा। उपा२३४५। पवमानाभियर्षसि। इ
३ १ १ १ १ १ २र र १ १ १
हा। उपा२३४५ ॥(१) पवमानाभियर्षसि। इहा। उ
३ १ १ १ १ १ २र १ १ १ १ ३ १ १ १ १
पा२३४५। पवमानाभियर्षसि। इहा। उपा२३४५।
१र १र र र १र र १ २र १ ३ १ १ १ १ १र
पुनानोवारेपवमानोअव्यये। इहा। उपा२३४५। वृषो

* ऊ० गा० ३प्र० १अ० ४खा०।

हे "इन्दो" "द्युमत्" दीप्तिमत् "सुवीर्य्यं" शोभन-वीर्य्यं सामर्थ्यञ्च "पवस्व" क्षर, शोभन-सामर्थ्योपेता धाराः पवस्वेत्यर्थः । "उत्" अथवा "नः" अस्माकं* "वाजसातये" सङ्ग्रामाय† "बृहतीः" "इषः" द्युमत् सुवीर्यं सम्पादयितुं पवस्वेति योज्यम् ॥ ४ ॥

अथ पञ्चमी ।

१ २ ३ १र २ ३ २ ३ १ २ ३ १ २
अत्या हियाना न हेतृभिरसृग्रं वाजसातये ।
१र २ ३ १ २ ३ १ २
वि वारमव्यमाशवः ॥ ५ ‡ ॥

"वाजसातये" सङ्ग्रामाय "हियानाः" प्रेर्य्यमाणाः आशवः शीघ्रं धावन्ति तद्वत् "हेतृभिः" प्रेरकैः प्रेर्यमाणाः "आशवः" शीघ्रगामिनः सोमाः "वाजाय" अन्नलाभाय "अव्यं" "वारं" वालं दशापवित्रं "व्यत्यसृग्रम्" व्यतिसृजन्ते¶ ॥ ५ ॥

---

* 'नः—अस्मभ्यम्'—इति वि० ।

† 'वाजसातये अन्नदानार्थम्'—इति वि० ।

‡ ऋ० वे० ९, ८, २, २ ।

¶ "व्यत्यसृग्रम्"—इत्यत्र ऋगादिपादाद् "अति"—इत्युपसर्गः, ऋक्तृतीयपादाद् "वि"—इत्युपसर्गस्य सङ्गृहीतः, "व्यत्या"—इति श्रुतावापदस्यानर्थक्यमपि स्वीकृतमाचार्येण । विवरणकृता त्वहिनाम दानवइत्यादिना व्याख्यातम् । परन्तूभय-[illegible] व्याख्यानं पदपन्यविरुद्धत्वादुपेक्षणीयम्, तत्र हि—"अत्याः, हियानाः"—इति पाठ-दर्शनात् ।

२ १२र १ ३ ११११ १र २ १
अचिक्रदद्वने। इहा। उपा२३४५॥(२) वृषोअचिक्रद

२र १ ३ ११११ १र २ १२र १
द्वने। इहा। उपा२३४५। वृषोअचिक्रदद्वने। इहा।

३ ११११ २र१र र २र र १
उपा२३४५। देवाजाऽसोमपवमाननिष्कृतम्। इहा।

३ ११११ २उ ऽ ऽ १र २र २र २
उपा२३४५। हाउहाउहाउवा। गोभिरञ्जानोअर्षसि।

१ ३ ११११
इहा। उपा२३४५(३)॥ ५ *॥ [५]

१ १ र २ १ २ १ र २
॥ सम्मतम् ॥ मृज्यमानःसुहस्तिया। समुद्रे वाऽच

१ १ १ २ २ १
मिन्वसायि। रयिम्पा२३यिशा। गाम्बहुलम्। पुरुस्प

२ ३ ३ १ १र २ १ २ १
हाम। औहो३४वाहायि। प। वामा२३ना ३। हो

२ २ १ २ ११२र र १ २ १
वा३हा। भियर्षा२३सा३४३यि॥(१) पवमानाभियर्षसा

र २ १ २ र र १ २ १र
यि। पुनानो२३वा। रेपवमा। नोआव्यायां। औ

२ ४ ३र २ १ २ १ २ २
हो३वाहायि। पु। पोआ२३चा३यि। होवा३हायि।

१ २ र १ १२१ र
क्रदद्दा२३ना३४३यि॥(२) वृषोअचिक्रदद्वनायि। वृषो

* ऊ० गा० ३प्र० २अ० ५मा०।

[अथवा विप्रइति मेधावि नामसु (निघ० ३, १५, १) मेधाविनम्] "देववीतये" देवपानाय* "सुष्वाणम्" अभिषूयमाणं सोमम् "अभि" आभिमुख्येन "प्रगायत" प्रकर्षेण स्तुत ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ १ २र ३ १ २
पवन्तेवाजसातयेसोमाःसहस्रपाजसः ।
३ २ ३ १ २
गृणानादेववीतये ॥ ३ † ॥

"पवन्ते" चरन्ति "सोमाः" । किमर्थम् ? "वाजसातये" अन्नस्य लाभाय । कीदृशाः ? "सहस्रपाजसः" बहुबलाः नृणां बलप्रदा इत्यर्थः‡ "गृणानाः" [कर्मणि कर्त्तृप्रत्ययः (३, १, ८५)] स्तूयमानाः । पुनः किमर्थम् ? "देववीतये" [देवानां वीतिर्गतिः प्राप्तिलक्षणं वा यस्मिन् स देववीतिः] यज्ञः, तदर्थम् [यज्ञसिद्धिः साक्षात् प्रयोजनं तद्द्वारा वाज-लाभइति ॥ ३ ॥

अथ चतुर्थी ।

३ २ ३ १ २ ३ १ २ ३ १र २र
उतनोवाजसातयेपवस्वबृहतीरिषः ।
३ १ २ ३ १ २
द्युमदिन्दोसुवीर्यम् ॥ ४ ¶ ॥

---

* 'देववीतये—देवानां भक्षणाय'—इति वि० ।

† ऋ० वे० ६, ८, १, १ ।

‡ 'सहस्रपाजसः—सहस्र-पान-समर्थाः'—इति वि० ।

¶ ऋ० वे० ६, ८, १, १ ।

अचायिक्रदद्वनायि । देवाना२३९सो । मापवमा । न
नायिष्कार्त्ताम् । औहो३४वाहायि । गो । भायिरा
२३ञ्जा३ । होवा३हा । नोअषा२३सा३४३यि । ओ
२३४५ई । डा(३) ॥ ५ * ॥ [६]

॥ त्रिणिधनमायास्यम् ॥ मृज्यमानःसुहाहाउहोवा ।
स्तायासा२३४म् । द्रेवाः । चमा३४५यि । न्वार ३ ४
सो । रया३४ । औहोवा । पिशङ्गम्वऌलार्म् । पुरू
३४५ । स्पृ२३४हाम् । पवा३४ । औहोवा । माना२ ।
भिया३४५ । षा२३४सो ॥(१) पवमानाभियाहाउहोवा ।
षासायिपा२३४वा । माना२ । भिया३४५ । षा२३४सो ।
पुना३४ । औहोवा । नोवारेपवमा२ । नोआ३४५ ।
व्या२३४ये । वृषो३४ । औहोवा । आचार्३यि । क्रदा

* ज० गा० ८प्र० १अ० ५सा० ।

हे "इन्दो" "द्युमत्" दीप्तिमत् "सुवीर्य्यं" शोभन-वीर्य्यं सामर्थ्यञ्च "पवस्व" क्षर, शोभन-सामर्थ्योपेता धाराः पवस्वेत्यर्थः। "उत्" अथवा "नः" अस्माकं* "वाजसातये" सङ्ग्रामाय† "बृहतीः" "इषः" द्युमत् सुवीर्यं सम्पादयितुं पवस्वेति योज्यम्॥ ४॥

अथ पञ्चमी।

१ २   ३ २उ ३ २ ३ १ २ ३ १ २
अत्या ह्रियाना न हेतृभिरसृग्रं वाजसातये।
२उ ३ १ २ ३ १ २
वि वारमव्यमाशवः॥ ५ ‡॥

"वाजसातये" सङ्ग्रामाय "ह्रियानाः" प्रेर्य्यमाणाः आशवः शीघ्रं धावन्ति तद्वत् "हेतृभिः" प्रेरकैः प्रेर्यमाणाः "आशवः" शीघ्रगामिनः सोमाः "वाजाय" अन्नलाभाय "अव्यं" "वारं" वालं दशापवित्रं "व्यत्यसृग्रम्" व्यतिसृजन्ते¶॥ ५॥

---

* 'नः—अस्मभ्यम्'—इति वि०।

† 'वाजसातये अन्नदानार्थम्'—इति वि०।

‡ ऋ० वे० ६, ८, २, २।

¶ "व्यत्यसृग्रम्"—इत्यत्र ऋगादिपादात् "अति"—इत्युपसर्गः, ऋक्तृतीयपादात् "वि"—इत्युपसर्गश्च सङ्गृहीतः, "व्यत्या"—इति श्रुतावापदस्यानर्थक्यमपि स्वीकृतमाचार्य्येण। विवरणकृता त्वश्विनाम दानवद्इत्यादिना व्याख्यातम्। परन्तूभयविधमेव व्याख्यानं पदग्रन्थविरुद्धत्वादुपेक्षणीयम्, तत्र हि—"अत्याः, ह्रियानाः"—इति पाठ-दर्शनात्।

३ ५ २र र १२ १
३४५त्। वा२३४ने॥(२) वृषोऽअचिक्रदद्बाउह्वोवा। वा।
२ ३ ५ १ ३२ ३
वानायिवा२३र्षा। अचा२यि। क्रदा३४५त्। वा२३४
५ ४ २ ३र४र ५ १र र ३१
ने। देवा३४। औहोवा। ना५सोमपवमा२। नना
३ ५ १र २ ३र ४र ५ १
३४५यिः। का२३४त्ताम्। गोभा३४। औहोवा। आ
३ १ ३ ५
ऽजा२। नआ३४५। षा३४५। षा२३४मो(३)॥ ६*॥[७]
५ ४ २ ४ ५ ४ ५ १ १र
॥ अभीवर्त्तम्॥ पवा३मा३नाऽभियर्षसोवा। पावमा
र १ २ १ र र २ ३र ४५र
ना। भियार्षा१सा२यि। पूनानोवा३१२३४। रैपवमा।
२र१ २ १ २ ३ २ १
नोआव्या१या२यि। वृषोआ१चा२यि। क्रदा३त्। वा
३ १ १ १ १
२३४५। ना२३४५यि२)॥ ८†॥ [८]
५ र २ ४ ५ ४ ५ २१ २ १
॥ कालेयम‡॥ वृषोआ३चिक्रददनायि। वृषोअचा
२ ३ २ १ २र ३र र २ १ ३
यि। क्रददना२३यिं। देवाना५मो३। मा२३४। पव

* ऊ० गा० ८प्र० १ख० ६मा०।

† ऊ० गा० ८प्र० १ख० ८मा०।

‡ "महाकालेयम"—इति ख० पु० पाठः।

अथ षष्ठी।

१ २ ३ १ २ ३ १र २र ३ २ ३ १ २
तेनःसहस्रिणꣳरयिम्पवन्तामासुवीर्यम्।
३ २ ३ २ ३ १ ०
स्वानादेवासइन्दवः॥ ६ *॥

"ते" "इन्दवः" सोमाः "नः" अस्माकं "सहस्रिणं" सहस्र-सङ्ख्या-युक्तं "रयिं" धनं "सुवीर्यं" च "आ पवन्ताम्"†। कीदृशास्ते? "स्वानाः" सुवानाः स्तूयमाना "देवासः" द्योतनादि-गुणकाः॥

"स्वानाः"-"सुवानाः"—इति पाठौ॥ ६॥

अथ सप्तमी।

२ १ २ ३ १ २ ३ २ ३ २३ ३ १ २
वाश्राअर्षन्तीन्दवोभिवत्सन्नमातरः।
३ १र २र
दधन्विरेगभस्त्योः॥ ७ ‡॥

"वाश्राः" शब्दयन्तः¶ "इन्दवः" सोमाः "अभ्यर्षन्ति" पात्रं प्रति वाश्राः शब्दकारिण्यो "मातरः" मातृभूता गावः

* ऋ० वे० ६, ८, २, ३।

† 'आ—आनुपूर्व्येण'—इति वि०।

‡ ऋ० वे० ६, ८, २, ४।

¶ 'वाश्राः—वासनशीलाः'—इति वि०।

२ १ २ र १ २र १
षू। इन्द्रस्याशू२३। अमोरायार२३न्। आपस्युभायिः।
१ १ २र १ २र १र
इन्दुर्हायिन्वा२३। नोअज्याता२३यि। मानोषिभा३१
२ १ २ १ २र १र
उ ॥(२) इन्द्रस्यासो२३। मपवामा२३। नाऊर्मिणा।
२ १ २र १ २र १र २
तविष्यामा२३। णोजठारा२३यि। षूआविशा। प्रनः
१ २ १ २र १र २ र १
पायिन्वा२३। विद्युदाभ्रे२३। वारोदसायि। धियानो
२र १ २र १ २ १ १ १ १
वा२३। जाउउपामा२३। होग्रश्वता३१उवा२३४५ (३)

॥ १४ * ॥ [१]

२ १ र २ र १
॥ कावम् ॥ धर्त्तावा। दिवःपवतेका। त्वियोरा
१ र र र र २ र १ १
सा२ः। दक्षोदेवानामनुमा। दियोन्हभा२यिः। हरिः
र र २ १ १ २ ४ ५
सृजानोअतियो। नसत्वाभा२३यिः। वार्थो ३ पाजा।
२ १ १ २ ४ २र १
सिक्रणूषा२३यि। नादा३यिषूवा६५६ ॥(१) शूरोवा।
र २ १ १ र
नधत्तआयुधा। गभस्तायो२ः। स्वःसिषासन्नथिरो।

---

* ऊ० गा० ४प्र० २ख० १४सा०। "स्वारकावम्"—इति ख० पु० पाठः।

"वृषम" अन्नम् अभितः "ममस्वरन्" सम्यक् शब्दयन्ति प्रयच्छन्तीति यावत्* ॥ ३ ॥ २०

५र र   ३ १   ४ ५
॥ गौरीवितम् † ॥ सोमाः । पवा३ । तइन्दवाः ।

१ र   १   १ र र २   ४
अस्मभ्यङ्गातुवित्तमा२३ः । मायिताः स्वाना३१२३ः । अ

१ र   २   ४ ५
रे५पसाः । सवाधिया३१२३ः । सुवोवा । वा५यिदोई

५   ५र र   ३र २ ४   ५   १र र र
हायि ॥ १ तेपू । तामो३ । विपश्चिनाः । सोमासो

र   १ र र २   ४ र   १
दध्याशिरा२३ः । सरामोना३१२३ । दशा५तानाः । जा

२   ४ ५   ४ ५
यिगलवा३१२३ः । ध्रुवोवा । घा५र्त्तोईहायि ॥ (२)

५ र   ३र १   ४ ५   १ र र र
सुषा । णामो३ । वियद्धिभायिः । चितानागोरधित्व

१   २   ४   १
चा२३यि । आयिपमस्मा३१२३ । भ्यमा५भिताः । सा

४   ५
मस्वरा३१२३न् । वर्मोवा । वा५यिदोईहायि (३) ॥ १३ ॥ ‡ ॥ [१]

* 'ममस्वरन्—उन्मादयन' इति वि० ।

† "महागौरीवितम"—इति ख० पु० पाठ ।

‡ ऋ० गा० ७प्र० २अ० २३सा० ।

गविष्टायिषू२। इन्द्रस्यशुष्ममीरयान्। अपस्यूभा२३यि:।

आयिन्द्र३ह्रायिन्वा। नोअज्याता२३यि। माना३यिषा

पुयिभा६५६यि: ॥(२) इन्द्रोवा। स्यसोमपवमा। नऊ

र्म्मायिणा२। तविष्यमाणोजठरायि। धुआवायिशा२।

प्रन:पिन्वविद्युदभ्रे। वरोदासा२३यि। धाया३नोवा।

जा२३उपामा२३। द्दोआ३स्वा५ता६५६:(३) ॥ १६ * ॥ [२]

॥ यज्ञायज्ञीयम् ॥ धर्त्ताऽ५दि। वा३:पा३वतेका।

त्वीयोरसोदक्षोदेवानामनुमा। दो३योनृ३भायि:। हरा

२यि:सृजानोअत्योमत्व। भिर्वा२३र्था। ऊम्मायि। पा

३जा। सायिकृणुषेनदा२यिषवा३ ॥(१) आभू। रो

नधत्तआयुधागभस्त्यो:स्व:मिषासन्नयिरो। गा३वायिष्टा

३यिषू। इन्द्रा२स्यशुष्ममीरयन्नपस्यु। भिरा२३यिन्द:।

* ऊ० गा० ६प्र० १ख० १६सा० ।

॥ मधुश्च्युन्निधनम् ॥ सोमाःपवन्तइन्दवा३ए। अस्म
भ्यङ्गा३तुवित्तमा३ः। हा३हा। औ३हो३वा। आयिही
२। मित्रास्स्वाना३अरेपसा३ः। हा३हा। औ३हो
३वा। आयिही२। स्वाधियाः३। हा३हायि। औ
३हो३वा। आयिही२। सुवः। वा२यिदा२३४औहो
वा ॥(१) तेपूतासोविपश्चिता३ए। सोमासोदा३ध्या
शिरा३ः। हा३हा। औ३हो३वा। आयिही२। सू
रासोना३दार्शतासा३ः। हा३हा। औ३हो३वा। आ
यिही२। जायिगत्नवा३ः। हा३हायि। औ३हो३वा।
आयिही२। ध्रुवाः। घा२र्त्ता२३४औहोवा ॥(२) सु
ष्वाणासोवियद्रिभा३यिरे। चितानागो३राधित्वचा३।
हा३हा। औ३हो३वा। आयिही२। इषमस्मा३भ्या

ऊम्मायि। हा३यिन्वा। नोअज्यतेमना२यिषिभाउ ॥(२)
भायिरायि। द्रस्यसोमपवमानऊर्म्मिणातविष्यमाणोजठरा
यि। षू३आवा३यिशा। प्रना२:पिन्वविद्युदभ्रेवरोद।
सीधार३या। ऊम्मायि। नो३वा। जा॒उपमाहिशार
श्वताउ। वा३४५(३) ॥ १५ * ॥ [३]

॥ शाकरम् † ॥ हाउधार्त्ता। दा२३४यि। वःपवते
क्त्वियोरसा। एहिया। एहिया३४। हाउदाक्षाः।
दा२३४यि। वानामनुमादियोनृभिः। एहिया। एहि
या३४। हाउहारीः। सा२३४। जानोअत्योनसत्व
भिः। एहिया। एहिया३४। हाउवार्था। पा२३४।
जा॒सिक्तणुषेनदीषुवा। एहिया। एहिया३४। हाउ ॥(१)
हाउशूरा:। ना२३४। धत्तआयुधागभस्त्योः। एहि

---

* ऊ० गा० १५प्र० १अ० १५सा०। † "शार्गम्"—इति ख० पु० पाठः।

२ २ २ ५ २ १ १
मभिता३ः । हा ३ हा । औ३हो ३ वा । आयिही२ ।

१ २ २ २ ५ १ १ १
सामस्वरा३न् । हा३हायि । औ३हो३वा । आयिही

१ ३ ५र र २ १ ३१११
२ । वसु । वा२यिदा२३४औहोवा । मधुश्च्युता२३४

१
५ः (३) ॥ १४ * ॥ [२]

२र १ २ ५
॥ वाङ्निधनङ्कौत्सम् ॥ सोमाःपावा३१२३४ । तइ ।

३२ २११२ ५ ३२ २१
द्वा३ । अस्मभ्यङ्गा३१२३४ । तुवि । तमा३ः । मित्रा

२ ५र ३२ २१ २
स्वाना३१२३४ः । अरे । पसा३ः । सुवाधीया३१२३ः ।

४ २र १ १ ५ ३२
सुवा५विदा३ ॥ (१) तेपूतासो३१२३४ । विपः । चिता

२र१र र २ ५र ३२ २र१
३ः । सोमासोदा३१२३४ । धिया । शिरा३ः । मूरासो

२ ५ ३र २ २१ २
ना३१२३४ । दर्श । तासा३ः । जिगात्नावा३ १ २ ३ः ।

४ २१ २ ५ २१
ध्रुवा५घृता३ ॥ (२) मृषाणासो३१२३४ । विय । द्रिभा

२१र र २ ५ ३२ २१
३यिः । चितानागो३१२३४ः । अधि । त्वचा३यि । वृषा

* ऊ० गा० प्र० ९ ख० १४ मा० ।

या । एहिया३४ । हाउम्बवाः । मा२३४यि । षास
न्रयिरोगविष्टिषु । एहिया । एहिया३४ । हावायिन्द्रा ।
स्या२३४ । शुष्ममीरयन्नपस्युभिः । एहिया । एहिया
३४ । हावायिन्दूः । हा२३४यि । न्वानोअज्यतेमनी
षिभिः । एहिया । एहिया३४ । हाउ ॥(२) हावायि
न्द्रा । स्या२३४ । सोमपवमानऊर्म्मिणा । एहिया ।
एहिया३४ । हाउतावायि । ष्या२३४ । माणाजठरेष्वा
विश । एहिया । एहिया३४ । हाउप्राना: । पा२३४
यि । न्वविद्युदभ्रेमवरोदसी । एहिया । एहिया३४ ।
हाउधाया । नो२३४ । वाजा१उपमाहिशश्वत: । एहि
या । एहिया३४ । हाउ । होऽ५ई । डा(३) ॥ २० * ॥ [४]

॥ वासिष्ठम् † ॥ उद्धवायि । धर्त्ता३४औहोवा । दि

---

* ऊ० गा० १७प्र० १ख० २०सा० ।

† "उद्धवायि वासिष्ठम्"—इति ख० पु० पाठः ।

२ ५ ३ २ १ १ २
माम्मा३१२३४। भ्यम। भिता३ः। समाखारा३१२३

४
न्। वसूपुविदाउ(३)॥ १५ *॥ [३]

५र र ३ २ १ ४ ५ २ १ १ १
॥ ऐडक्रौञ्चम्॥ सोमाःपवन्तइन्दवाः। अस्माभ्यङ्गा।

१ ३ २ १ २ ३ ५ १र १र १र१२ १ १
तुवित्तमाः। मायित्राओ२३४वा। स्वानाअरेपसा २ ३

११ १र २ १ २ १ २ ५र र३र १र
४ ५ः। सुवाधियाः। सुवर्वा२३यिदा३४३ः ॥(१)तेपूतासो

३ ४ ५ १र १ २र १ १ १र २ १ ३ १
विपश्चिताः। सोमासोदा। धियाशिराः। ह्वराओ२३

५ १र १२ १र १ १११ ३ २ १ १ १र
४वा। सोनदर्श्रतासा२३४५ः। जिगत्नवाः। ध्रुवाघा

२ ५ र १र २र ३ ४ ५ २ १
२३र्त्ता३४३यि ॥(२) सुष्वाणासोवियद्रिभायिः। चिता

२र १ २ ३ २ १ २ ३ ५ २ १
नागोः। अधित्वचायि। आयिषाओ२३४वा। अस्म

२ १ ३ ११११ १ २ १ २१ २
भ्यमभिता२३४५ः। समस्वरान्। वसुवा२३यिदा३४३ः।

१
ओ२३४५ई। ई। डा(३)॥ १६ †॥ ,४]

३र १ २ ४ ५ ५ २
॥ श्यावाश्वम्॥ सोमा३१ः। पा३व। तइ। दा३

* ऊ० गा० ३प्र० १ख० १५सा०।

† ऊ० गा० ३प्र० १ख० १६सा०।

२ १ र   १ २ ४र ५   ३ २   ३र ४र ५   १र
वाः। पवते। क्रत्वियोरसाः। दत्ता३४औहोवा। दे

२ १   २र ३ ४र ५   ३ २   ३र ४र ५
वा। ना३मनु। मादियोनृभायिः। हरा३४औहोवा।

१   २ १   १र ३ ४ ५   ३ २   ३र ४र ५
व्रजा। नो३अति। योनसत्वभायिः। वृथा३४औहोवा।

१र   २ १   २र   ३ २   ४   ३र
पाजा। सिक्तणु। षे। नदा३यिषू५वा६५६॥(१) शू

२   ३र ४र ५   १   २ १र   २र ३ ४   ५
रा३४औहोवा। नधा। ता३आयु। धागभस्तियोः।

३ २   ३र ४र ५   १   २ १   २र ३ ४   ५
स्रवा३४औहोवा। सिषा। सा३नृथि। रोगविष्टिषू।

३ २   ३र ४र ५   १   २ १   २ ३ ४   ५
इन्द्रा३४औहोवा। स्यशू। ष्मा३मीर। यन्नपस्युभा

३ २   ३र ४र ५   १   २र १   २र   ३
यिः। इन्द्र३४औहोवा। हिन्वा। नोअज्य। ते। म

२   ४   ३ २   ३र ४र ५   १
ना३यिषा५यिभा६५६यिः॥(२) इन्द्रा३४औहोवा। स्य

२ १   १र ३ ४र ५   ३ २   ३र ४र ५
सो। मा३पव। मानऊर्म्मिणा। तवा ३ ४ औहोवा।

१   २ १   २र ३ ४र ५   ३ २   ३र ४र ५
ष्यमा। णो३जठ। रेषुआविशा। प्रना३४औहोवा।

१   २ १   १र ३ ४र ५   ३ २   ३ २
पिन्वा। विद्युद। भ्रेवरोदसायि। उभवायि। धिया

वः। एहिया। आ। सभ्यङ्गात्। वि। तमा२ः।
एहिया२। मित्रास्त्वानाआ३रे३। पा२३४साः। ऐ
हा२यि। एहिया२। सुवाधियाःपू३वा३ः। वा३४५यि
दो६हायि॥(१) तेपू३१। ता३मो। विपः। चा३
यितः। एहिया। सो। मामोदधायि। आ।
गिरा२ः। एहिया२। सूरामोनादा३र्गा३। ता२३४माः।
ऐहा२यि। एहि या२। जिगत्नवोध्रू३वा३ः। धा३
४५ त्तो६हायि॥(२) सुषा३१। णा३सो। विय।
द्रा३यिभिः। एहिया। चायि। तानागोरा। धि। त्वचा
२यि। एहिया२। दूषमस्मा भ्या३मा३। भा२३४यिताः।
ऐहा२यि। एहिया२। समस्वरान्वा३ह३। वा३
४५ यिदो६हा यि(३)॥१६*॥[५]

* ऊ० गा० १५प्र० २ख० १६सू०१।

३र ४र ५ १र २ १ २र ३ २ ४
३४औहोवा। नोवा। जा७उप। मा। हिंसा३स्वा
५ताई५६:(३) ॥ १६ * ॥ [५]

२ १र १ १ २र १ २र १
॥ वायोरभिक्रदन्† ॥ धर्त्तादिवःपवतेकृत्वियो। हो
२ १ र र र र र २ २ २ १
यिरासाः। दक्षोदेवानामनुमाद्यिो१नृ३भायिः। हरिः
र र र २ २ २ ३ ५ २
सृजानोअत्यियोनसा१त्वा३भायिः। वा२३४र्था। पा२३४
५ १ २ ३ २ १ २ ४
जा। सायिक्तणुषा३यि। हा२३यि। नदा३यिषू५वा६
१र २र १ २ १र २र १ २र १ २ १
५६ ॥(१) शूरोनधत्तआयुधागभौ। होस्तायोः। स्वःसि
र र २ २ २ १ र २
षासन्रथिरोगवा१यिष्टा३यिषू। इन्द्रस्यशुष्ममीरयन्नपा१
२ २ ३ ५ ३ ५ १ २
स्यू३भायिः। आ२३४यिन्दूः। हा२३४यिन्वा। नोअ
३ २ १ २ ४
ज्यता३यि। हा२३यि। मना३यिषा५यिभा६५६यिः ॥(२)
१ २ र १ २र १ २र १ २ १ र र
इन्द्रस्यसोमपवमानओ। होम्मायिणा। तविष्यमाणो
र २ २ २ १ र २ २ २
जठरेष्वा१वा३यिशा। प्रनःपिन्वविद्युदभ्रेवरो१दा३सा

* ऊ० गा० २३प्र० २ख० १६सा० ।

† "वायोरभिक्रन्दः"—इति स० पु० पाठः ।

॥ आन्धीगवम् ॥ सोमाःपवन्तआ१यिन्दावाः । अ
स्मभ्यम् । गातु२३वा । ऊम्मा२१ऽ२ । तमामित्रास्वा
नाअरेपसा२३४५ः । सूवा३उवा । धी२याः । स्व२३वाः ।
विदा । औ३होवा ॥(१) तेपूतासोविपा१श्चायिताः । सो
मासः । दधार३आ । ऊम्मा २१ऽ२ । शिरःमूरासोन
दर्शतासा२३४५ः । जायिगा३उवा । त्वा२वो । ध्रू२३
वाः । घृता । औ३होवा ॥(२) सुष्वाणासोविया१द्रा
यिभायिः । चितानाः । गोरा२३धा । ऊम्मा २१ऽ२ ।
त्वचीषमस्मभ्यमभिता२३४५ः । सामा३उवा । स्वा२रा
न् । वा२३स्वः । विदा । औ३होवा । हो५ई ।
डा(३) ॥ १७* ॥ [६]

॥ निषेधम् ॥ सोमाःपवन्ता३इन्दवाः । अस्माभ्य

* ऊ० गा० १५प्र० १ख० १७सा० ।

२ ५ ३ ५ १ २ ३ १ १
यि। धा२३४या। नो२३४वा। जा॑उपमा३। हा२

२ ४
३। द्विशा३श्वा५ता६५६ः(३) ॥ १८ * ॥ [६] १२

अथ प्रगाथरूपे तृतीयसूक्ते† —

प्रथमा।

१ २ ३ २ ३ ३ २ ३क २र ३ २ ३ १ २
यदिन्द्र प्रागपागुदग्न्यग्वा हूयसे नृभिः।

१ २ ३ १र २र ३ २ ३ १ ३ १ २
सिमा पुरू नृषूतो अस्यानवेसि प्रशर्द्ध तुर्वशे ॥ १ ‡ ॥

हे "इन्द्र!" "यत्" यदि "प्राक्" प्राच्यां दिशि वर्त्तमानैः [सप्तम्यां प्राक्-शब्दात् विहितस्यास्तातेः¶"अञ्चेर्लुगिति(५,३,३०) लुक्], यदि वा "अपाक्" प्रतीच्यां दिशि वर्त्तमानैः, यदि वा "उदक्" उदीच्यां दिशि वर्त्तमानैः यद्वा "न्यक्" नीच्यां दिशि अधस्ताद्वर्त्तमानैः [“न्यधी च (६,२,५३)"—इति प्रकृतिस्वरत्वम्, "उदात्तस्वरितयोर्यणः (८,२,४)"—इति परस्यानुदात्तस्य स्वरितत्वम्]; एवम्भूतैः "नृभिः" स्तोतृभिः त्वं "हूयसे" स्व-स्व-कार्थाय आहूयसे [“हिंसिमग्रेष्ठेन्द्रसिमद्रतिवैश्रेष्ठमाचक्षतइति वाजसनेयकम्]। यद्यप्येवं बहुभिराहूयसे तथापि "अनवे"

* ऊ० गा० १३प्र० २अ० १९सा०।

† उक्तो माध्यन्दिनः पवमानः, इदानीं पृष्ठान्युच्यन्ते—इति वि०।

‡ छ० आ० ३, २, ४, ७ (१भा० ५७३पृ०)=ऋ० वे० ५, ७, ३०, १।

¶ "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः"—इति पा० ५, ३, २७।

१ २ १ १ १ १ ४ ५ १
ज्ञा । तुविक्तमा २ः । इहा३ । मायित्वा३स्वानाः । हा
३ ३ १र१ २ १ २ १ २ ४ ५
होर३४हा । अरेपा२३साः । इहा३ । सुवा३धीयाः ।
२ १ ५ ३ १ ४ १र र र र
हाहो२३४हा । सुवा३र्वा५यिदा६५६ः ॥(१) तेपूतासो
१ र १ २र१ १ र १ १ २
वा३यिपश्चिताः । सोमासोदा । धियाशिरा २ः । इहा
१ २ ४ ५ २ ३ ५ २ १ २
३ । स्वरा३सोना । हाहो२३४हा । दर्शता २ ३ साः ।
१२ १ २ ४ ५ २ ३ ५ ३ २
इहा३ । जायिगा३त्नावाः । हाहो२३४हा । ध्रुवा३
४ २ र र र २ १
घा५त्तौ६५६यि ॥(२) सुष्वाणासोवा३यद्रिभायिः । चिता
२र १ २ १ १ २ १ २ ४ ५
नागोः । अधित्वचा २यि । इहा३ । आयिषा३मास्मा ।
२ ३ ५ २ १ २ १ २ १ २ ४
हाहो२३४हा । भ्यमभा२३यिताः । इहा३ । सामा३स्व
५ २ ३ ५ ३ २ ४ ३ १ १ १
रान् । हाहो२३४हा । वमू३वा५यिदा६४६ः । हो२३४
१
५(३) ॥ १८ * ॥ [७]

२र र १ र २र १ १
॥ क्रौञ्चाद्यम् ॥ सोमाःपवौहो । ताइन्दवाः । अस्म

---

* ऊ० गा० १५प्र० २ख० १८गा० ।

अनुर्नाम राजा तस्य पुत्रे राजर्षौ "पुरु" बहुलं "नृषूत:" नृभिस्त्वदीयैः स्तोतृभिः प्रेरितः "असि" भवसि राज्ञो हितकरणे त्वां स्तोतारः प्रीणयन्तीत्यर्थः [षु प्रेरणे, अस्मात् कर्म्मणि निष्ठा "तृतीया कर्म्मणि (६,२,४८)"—इति पूर्वपद-प्रकृति-स्वरत्वम्] अपिच हे "प्रशर्द्ध" प्रकर्षेण शर्द्धयितरभिभवितरिन्द्र ! "तुर्वशे" —एतत्सञ्ज्ञके राजनि नृषूतोऽसि नृभिः प्रेरितोऽसि भवसि ॥१॥

अथ द्वितीया ।

यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा ।
कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इन्द्रा यच्छन्त्या गहि ॥२*॥१३

"यद्वा" यद्यपि "रुमे" रुमादिषु चतुर्षु राजसु हे "इन्द्र" ! त्वं "सचा" सह "मादयसे" माद्यसि तथापि "ब्रह्मवाहसः" ब्रह्मणां स्तोत्राणां वोढारः अथवा अन्नानां वोढारः "कण्वासः" कण्वगोत्रा ऋषयः "स्तोमेभिः" स्तोत्रैः स्तोत्रसमूहैः सह "इन्द्र !" त्वाम् "आयच्छन्ति" आयमयन्ति अतस्त्वम् "आगहि" शीघ्रमागच्छ [गमेर्लोटि छान्दसः (२, ४, ७३) शपो लुक्] ॥

"स्तोमेभिर्ब्रह्मवाहसः"—"ब्रह्मभिःस्तोमवाहसः"——इति पाठौ ॥ २ ॥ १३ .

॥ नैपातिथम् ॥ यदिन्द्र प्रागपागुदाग् । न्यग्वा

* ऋ० वे० ५, ७, २०, २ ।

१ २ ४ २र १र र
भ्यङ्गा३ । तूवा३यिता५मा६५६ः । मित्रास्स्वानौहो ।
२र १र २र १ २ ४
आरेपमाः । सुवाधिया३ः । सूवा३यिर्वा५यिदा६५६ः ॥(१)
२र र १र र २र १ १र र र १ २
तेपूतासौहो । वीपश्चिताः । सोमासोदा३ । धाआ३
४ २र र १र र २ १र २
ग्ना५यिरा६५६ः । सूरासोनौहो । दर्शतासाः । जिग
१ २ ४ २ र १र र
त्नवो३ । ध्रूवा३घा५र्त्तो६५६यि ॥(२) सुषाणासौहो ।
२र १ २ र र १ २ ४
वीयद्रिभायिः । चितानागो३ः । आधा३यित्वा५चा६५
२ १ र २र १ २ १
यि । दूषमस्त्रौहो । भ्यामभिताः । समस्वरा३न् । वा
२ ४
सू३वा५यिदा६५६ः(३) ॥ १ * ॥ [८]

४र ३ ४ २ ४
॥ यज्ञायज्ञीयम् ॥ सोमाऽ५ःप । वा ३ न्ता ३ इन्दा
५ १ २१ २ २ १ १र
वाः । आस्मभ्यङ्गा । तूवायित्ता३माः । मित्रा२स्वा ।
र २ १ २ १ १र
नाआर२३रे । ऊम्मायि । पा३साः । . सूवाधियःसुवा२
३ २ १ २ १र र र र र र
विंदा३ ॥(१) दास्तायि । पूतासोविपश्चितःसोमासोदा ।

* ऊ० गा० १६प्र० १ख० १सा० ।

ड्र। यसायिनुभीऽः। हाँ। औहो२३४हा। सिमा२
पुरूनृषूतोअ। सियानवे२३। हाँ। औहो२३४हा।
असायिप्रागा३। हा। औहो२३४हा। धा२त२३४औ
होवा। वा२३४शे ॥(१) अभिप्रगर्दतुर्वशा३ए। आसि
प्रश। धतूर्वशे३। हाँ। औहो२३४हा। यदा२रुमे
रुशमेध्या। वकायिक्रपा२३। हाँ। औहो२३४हा। इ
न्द्रामादा३। हा। औहो२३४हा। या२सा२३४औ
होवा। सा२३४चा ॥(२) इन्द्रमादयसेसचा३ए। आ
यिन्द्रमाद। यमायिमचा३। हाँ। औहो२३४हा।
कण्वा२सस्त्वास्तोमेभिर्ब्र। ह्मवाहमा२३ः। हाँ। औ
हो२३४हा। इन्द्रायाच्छा३। हाँ। औहो२३४हा।
ता२आ२३४औहोवा। गा२३४हो(३) ॥ १५ * ॥ [१] १३

* ऊ० गा० ४प्र० २ख० १५सा० ।

२ १ २ र १र १ २ १
धा३आप्रा३यिराः । सूरा२सः । नदा२३र्यो । ऊम्मा
२ २ १ र ३१ १
यि । ता३साः । जायिगत्नबोधवा२घृनाउ ॥(२) तायि
२ १र र र र र २ १ १ २
सू । ष्वाणासोव्यद्रिभिश्चितानागोः । आ३धायित्वा३चा
१ १ २ १ २ २
यि । दूषा२म । स्वभ्या२३मा । ऊम्मायि । भा३यिताः ।
१ ३ २ १११
सामस्वरन्वमू२विदाउ । वा३४५(३) ॥ १४ * ॥ [९] २०

अयायापवेति-तृचात्मकं पञ्चमं सूक्तम्,

तत्र, प्रथमा ।

३ १ ३ १ २ १र २र
अयापवापवस्वेनावमूनि
३ १ २ १ १ २ ३ १ २
मा(ं)श्वत्वइन्दोसरसिप्रधन्व ।
२र ३ २ ३ २ ३ २ ३ १
ब्रधश्चिद्यस्यवातोनजूतिं
२ ३ १ २ ३ १ २ ३ १ २
पुरुमेधाश्चित्तकवेनरन्धात् ॥ १ † ॥

हे सोम ! "अया" अनया "पवा" पवमानया "धारया" "एना" एनानि "वसूनि" धनानि "पवस्व" चर [ पवा—

* ऊ० गा० २३प्र० १ख० १४गा० ।

† ऋ० का० ६, १, ५, ९ ( २भा० १४२ पृ० )=ऋ० वे० ७, ४, २१, १ ।

अथ प्रगाथे चतुर्थसूक्तं*—

प्रथमा ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ १ २र
उभय॒ꣳ शृणवच्चनइन्द्रोअर्वागिदंवचः ।
३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ ३
सत्राच्यामघवांत्सोमपीतये धियाशविष्ठआगमत् ॥१†॥

"उभयं" स्तोत्रात्मकं शस्त्रात्मकञ्चोभयविधम् "इदं" "वचः" "अर्वाग्" अस्मदभिमुखम् इन्द्रः "शृणुत्" शृणोतु त्वञ्च "मघवान्" धनवान् इन्द्रः "सत्राच्या" अस्माकं सह अञ्चत्या "धिया" युक्तः सन् "शविष्ठः" अतिशयेन बलवान् "सोमपीतये" सोमस्य पानाय "आगमत्" आगच्छतु ॥ १ ॥

अथ द्वितीया ।

२उ ३ १ २ ३ १र २र ३ १ २ ३ १ २
त॒ꣳहिस्वराजंवृषभन्तमोजसाधिषणेनिष्टतक्षतुः ।
३ २ ३ १ २ ३ १र ३र ३ १ २ ३ २ ३ १ २
उतोपमानाम्प्रथमोनिषीदसिसोमकाम॒ꣳहितेमनः ॥२‡॥१४

"तंहि" तं खल्विन्द्रं "स्वराजं" स्वयमेव राजमानो "धिषणे" द्यावापृथिव्यौ "वृषभं" जगदुपकारकं वृष्टेर्वर्षकम् "ओजसा" बलेन "निष्टतक्षतुः" सञ्चरतुः "उत" अपिच यस्मादेवं तस्मात् हे

---

* 'स्वच्छावाकं साम'—इति वि०।

† छ० आ० ३, २, ५, ८ (१भा० ५९१पृ०)=ऋ० वे० ६, ४, ३५, २।

‡ ऋ० वे० ६, ४, ३५, २।

पूञ् पवने (क्र्या० प०) "अन्येभ्योऽपि दृश्यन्ते (३,२,१७८)"—इति विच् प्रत्ययः, आर्द्धधातुक-लक्षणो गुणः, "सावेकाच (६,१,१६८)"—इति तृतीयाया उदात्तत्वम्]। तथा हे "इन्दो!" त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके वसतीवर्याख्ये "प्रधन्व" प्रगच्छ। "यस्य" सोमस्य शोधने सति "अश्नश्चित्" सर्वेषां प्रज्ञापको मूलभूतो वा आदित्योऽपि "वातः न" वायुरिव "जूतिं" वेगं प्राप्तः सन् किञ्च "पुरुमेधश्चित्" बहुविध-यज्ञ इन्द्रोऽपि "तकवे" [तकतिर्गति-कर्म्मसु पठितः (निघ० २, १४, ९८), अस्मादौणादिक उन् प्रत्ययः] सोमं गच्छत; मह्यं "नरं" कर्मनेतारं पुत्रं "धात्" ददातु प्रयच्छतु। स त्वं प्रधन्वेति पूर्वेण सम्बन्धः॥

"यस्य"-"अत्र"—इति पाठौ, "जूति"-"जूतः"—इति, "धात्"-"दात्"—इति च॥१॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ २
उतनएनापवयापव

१ २ ३ २ ३ १ २ ३ २
स्वाधिश्रुतेश्रवाय्यस्यतीर्थे।

३ २ ३ १ २ २ १र २र
षष्ठिꣳसहस्रानैगुतोवसूनि।

१ २उ ३ १ २ ३ १ २
वृक्षन्नपक्वन्धूनवद्रणाय॥२*॥

---

* ऋ० वे० ७, ४, २९, ३।

इन्द्र ! उपमानभूतानामन्येषां देवानां मध्ये "प्रथमः" मुख्यः सन् "निषीदसि" वेद्यां सोमकामं "हि" खलु ते मनः ॥

"ओजसा" "ओजसः"—इति पाठौ ॥ २ ॥ १४

२ २ १
॥ वैयश्वम् ॥ उभयꣳशृणवच्चनाइए । आयिन्द्रो२

१र १ २ २ १र १र १
अर्वागिदंवचार२३ः । होवा३हायि । सत्राचियामघवा

१ २ २ ३ ५ २ १र
२न् । सो । मापा३हायि । ता२३४यायि । धियाश

१ २ १ ४ ५ २ र
विष्ठआ२३होयि । गमात् । औ२३होवा ॥(१) धिया

र २ १ १ २ १र १
शविष्ठआगमा३दे । धाया२शविष्ठआगमा२३त् । हो

१ २ १ २ १र १ २ २
वा३हायि । तꣳहिस्वराजा२वृषभाम् । तामो३हायि ।

३ ५ १ र १ २ १
जा२३४सा । धिषणेनिष्टता२३होयि । त्वतः । औ२३

४ ५ २ र २ १ र १
होवा ॥(२) धिषणेनिष्टतत्वतू३रे । धायिषा२णेनिष्टत

१ २ ९ १ र २ १र १
त्वतू२३ः । होवा३हायि । उतोपामा२प्रथमो । नायि

हे सोम! "उत" अपिच "श्रवाय्यस्य" सर्वैः श्रवणीयस्य तव "श्रुते" प्रसिद्धे [ यद्वा, षष्ठ्यर्थे चतुर्थी श्रुत-शब्दस्य ] "तोशे" स्थाने "नः" अस्माकं स्वभूते [illegible] "एना" अनया "पवया" पूयमानया "धारया" अधिकं "पवस्व" क्षर। "नैगुतः" नीचीनं शत्रोः* [ न [illegible] इति निगुतः शत्रवः, तेषां हन्तृत्वेन सम्बन्धी ] सोऽयं सोमः "षष्टिं" षष्टि-सङ्ख्याकानि "सहस्रा" सहस्राणि "वसूनि" धनानि "रणाय" शत्रूणां जयार्थं धनवत् अस्मानभ्यगमत् प्रागच्छदिति यावत्। कथमिव? "वृक्षं न पक्वं" पक्व-फलं वृक्षं यथा कम्पयति फलार्थी तद्वत् ॥२॥

अथ तृतीया।

२ ३ १ २ ३ २ ३ १ २ ३ १र
महीमे अस्यवृषनामशूषे

२र ३ १ २ ३ १ २
मा ऽस्त्वेवापृशनेवावधत्रे।

१ २ ३ १ २ ३ २ ३ २ ३
अस्वापयन्निगुतःस्नेहयच्चापा

२ ३ २३ १ २ ३ २
मित्रा ऽअपाचितोअचेतः ॥ ३ † ॥ २१

"मही" महते प्रभूते "वृषनाम" [सुपां सुलुगिति ( ३, १. ३९) सुपो लुक्] वृषनामनी वर्षण-नमने, शराणां वर्षणं, शत्रूणां नम-

* 'नैगुतः—निगुतानां नितरां गोपितानाम्' -इति वि०।

† ऋ० वे० ७, ३, २१, ४।

षा३र्वायि । दा२३४सायि । सोमकाम९ॅ्हिता२३यिहो

यि । मना । औ३होवा । हो५ई । डा(३) ॥ १६* ॥[१]

॥ वाभ्रम् ॥ उभयꣳश्रा । णवाच्चा१ना२ः । इन्द्रो

अर्वागिदांवा१चा२ः । सत्राच्यामघवांत्सोमपायिता१या

२यि । धियाश्रा २ ३ वा ३यि । छा२आ२३४औहोवा ।

गा २ ३ ४मात् ॥(१) धियाशवायि । छआगा१मा२त् ।

धियाशविष्ठआगा१मा२त् । तꣳहिस्वराजंवृषभन्तामो१

जासा२ । धिषणे२३ना३यिः । ता२ता २ ३ ४औहोवा ।

हा२३४तः ॥(२) धिषणेनायिः । नताह्वा१तू२ः । धि

षणेनिष्टताक्षा१तू२ः । उतोपमानाम्प्रथमोनिषायिदा१

* ऊ० गा० ४प्र० २ख० १६सा० ।

नम्, "इमे" एते द्वे कर्मणी "अस्य" सोमस्य "शूषे" सुखकरे* भवतः; ये च कर्मणी "मांश्चत्वे" [अश्वनामैतत् (निघ० १,१४,१८)] अश्वैः क्रियमाणे युद्धे† तत्साध्यत्वाद् युद्धमिह गृह्यते ] "वा" अपिवा "पृशने" स्पर्शन-साध्ये बाहु-युद्धे "वधत्रे" शत्रूणां हिंसन-साधने भवतः। सोऽयं "निगुतः" नीचैः शब्दायमानान् शत्रून् "अस्वापयत्" अस्वापत् अवधीदित्यर्थः। किञ्च "स्नेहयत्" प्राद्रावयत् सङ्ग्रामाच्छत्रून्। अथ प्रत्यक्षः। हे सोम! स त्वम् "अमित्रान्" शत्रून् "अपाचित" अपगमय। तथा च "अपाचितः" अग्नि-चयन मकुर्वतः नास्तिकान्‡ "इतः" अस्मच्छकाशात् अपाचित अपगमय [अचतिर्गतिकर्मा (धा० प०)] ॥ ३ ॥ २१

॥ औशाद्यम् ॥ औहोहायि। अयोहायि। पवा वस्वैनावस्व२३नो। औ३होयि। इहा। ई३या। मा२ अत्वइन्द्रोसरसिप्रधार२३न्वा। औ३हायि। इहा। ई३ या। मा२अत्वइन्द्रोसरसिप्रधार२३न्वा। औ३हायि।

* 'शूषे—स्वापयामः अथवा शत्रुं शोषणाय'—इति वि०।

† 'मांश्चत्वे—मंहनीयवाचे'—इति वि०।

‡ 'अपाचित—परागता नतया भागिनः' इति वि०।

२ १ २ १ ३ ५ २ २
सा२यि। सोमका२३मा३म्। हा२यिता२३४औहोवा।

३ ५
मा२३४नाः(३)॥ ७* ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य सप्तमः खण्डः† ॥ ७ ॥

---

अथाष्टम-खण्डे —

तृचात्मके प्रथमसूक्ते —

प्रथमा।

१ २ ३ १ २ ३ १२ ३२ ३ १ २
पवस्वदेवआयुषगिन्द्रङ्गच्छतुतेमदः।

३ १२ ३२ ३ १ २
वायुमारोहधर्म्मणा॥ ‡ १॥

हे सोम! "देवः" द्योतमानः त्वं "पवस्व" धारया क्षर। अपिच "ते" तव "मदः" मदकरः रसः "आयुषक्" तम् "इन्द्रं" प्रति "गच्छतु" अपिच त्वं "वायुं" "धर्मणा" धारकेण रसेन "आरोह" प्राप्नुहि॥

"देवः"-"देव"—इति पाठौ॥ १॥

---

* ऊ० गा० १८प्र० २ख० ७पा०।

† 'उक्तानि ष्टर्षानि'—इति वि०।

‡ छ० आ० ६, २, १, ५ (२भा० ३७पृ०)=ऋ० वे० ७, ४, २३, १।

इहा। ई३या। ब्रध्नश्चिद्यस्यवातोनजू२३तीम्। औ३
होयि। इहा। ई३या। पुरुमेधाश्चित्तकवेनरा२३धा
त्। औ३होयि। इहा। ई२। या२३४। औहोवा॥(१)
औहोहायि। उतोहायि। नएनापवयापवा२३स्वा। औ
३होयि। इहा। ई३या। अधिश्रुतेश्रवायियस्यता२प
यिर्थायि। औ३होयि। इहा। ई३या। पष्ठिᳩमह
स्यानैगुतोवस्व२३ने। औ३होयि। इहा। ई३या। वृ
त्रन्नपक्नन्धूनवद्रणा२३या। औ३होयि। इहा। ई२।
या२३४औहोवा॥(२) औहोहायि। महोहायि। मे
अस्यवृपनामग्रू२३षायि। औ३हायि। इहा। ई३या ३
माᳩस्यत्विवापृशनेवावधर२३त्रायि। औ३हायि। इहा।
ई३या। अस्वापयन्निगुतस्नेहयार२३चा। औ ३ होयि।

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २
पवमाननितोशसेरयिꣳसोमश्रवाय्यम् ।
१ २ ३ १र २र
इन्दोसमुद्रमाविश ॥ २ * ॥

हे "पवमान !" "इन्दो !" "सोम !" त्वं "श्रवाय्यं" श्रवणीयं "रयिं" शत्रूणां धनं "नि तोशसे" अतितरां पीडयसि† स त्वं "समुद्रं" द्रोणकलशम् "आ विश" प्रविश ॥

"इन्दो"-"प्रियः"—इति पाठौ ॥ २ ॥

अपघ्नन्पवसेमृधइति तृतीया‡ ।

३ १ २ ३ १ २
अपघ्नन्पवसेमृधः० ॥ ३ ॥ १५

ऋचः प्रतीकमिदम् ॥ सा च छन्दस्याम्नाता ( ६, १, १, ६=२भा० ४८ पृ० ) व्याख्याता च ॥ ३ ॥ १५

२ १ १ १ २
॥ सुरूपाद्यम् ॥ पवस्वदा२यि। इया २इया। व

२ १ १ १ १ २र १
आयूषा२क्। इन्द्रङ्गच्छा२। इया २इया। तुतेमा

---

* ऋ० वे० ७, ४, २३, ५ ।

† 'तोशसे—तंश दाने ददासि'—इति वि० ।

‡ छ० आ० ६, १, १, ६ ( २भा० ४८पृ० )=ऋ० वे० ७, १, ३४, ४ ।

२ २ ५ २ १ र र र र १ १ २
इहा । इ ३या । अपामित्राऽऽअपाचितोअचा२३यिताः ।
५ २ ३ २ १ ३ ५र र
औ३होयि । इहा । इ २ । या २ ३ ४ । औहोवा ।
१ १र ३ १
ए३ । दौदिहो१(३) ॥ १७ * ॥ [१]
१र २र ३र १ १ ३ १
॥ इहवद्दासिष्ठम् ॥ औहोवाहा ३ होयि । इहा ।
१र १ १ र १ ३ ४ ५ २र १ २
अयापवा । पवस्वै । नावसूना । माऽऽश्चत्वआयि । दो
१ १ ३ ४ ५ २ १ १ १ र २ ३ ४
३सर । सिप्रधन्वा । ब्रध्नश्चिद्या । म्या३वा । तोनजू
५ २ १र २ १ २ २ ५
तोम् । पुरुमेधाः । चित्तक । वा३४३यि । ना३रा५
१ १ २ १ २ ३ ४ ५ २
न्वा६५६त् ॥(१) उतनए । ना३पव । यापवस्वा । अ
१ २ १र २ ३ ४ ५ २ १
धिश्रुतायि । अवायि । यस्यतायिर्थायि । षष्ठिऽऽसहा ।
२ १ र २ ३ ४ ५ २ ३ १र २
स्वा३नैगु । तोवेसूनी । बृहन्नपा । कधून । वा३४३त् ।
२ ४ २ १र र १ १ २ ३
रा३णा५या६५६ ॥ २) महोमित्रा । म्या३तृष । नाम
४ ५ २र १ र २ १ र २ ३ ४ ५ २
श्रूषायि । माऽऽश्चत्वेवा । पृश्ने । वावधन्नायि । अ

* ऊ० गा० ३प्र० २अ० १७सा० ।

र १र १ २ १ २
दा२ः । वायुमारो२ । इया२इया । हधर्मा२३णा३

१ १र १ ३र १
४३ ॥(१) पवमाना२ । इया२इया । नितोशासा२यि ।

१र १ २ र १ र १ १
रयिꣳसोमा२इया । अवाआया२ । इन्दोसमू२ । इया

१ २ १र १ २ १ १
२इया । इमावा२३यिशा३४३ ॥(२) अपघ्नपा२ । इया

१ १र १ १ १ १
२इया । वसेमार्द्धा२ः । क्रतुवित्मो२ । इया२इया ।

२ १ १र १ १ २
ममत्मारा२ः । नुदस्वादा२यि । इया२इया । वयु

२ १
ञ्जा२३ना३४३म् । ओ२३४५ई । डा(३) ॥ १७ * ॥ [१]

५ १ ४ ५ ४ ५ १
॥ भासम् † ॥ पव । स्वा३दायि । वाः । ईया । आ

२ १ २ ५ २र ३र १
यू१षा२क् । आयिन्द्रङ्गच्छ । तु । तौ३हो । वाहा

१ १र १ ३ ५र र
यि । मदा२ः । वायू२३म् । आ२रो२३४औहोवा ।

१ २ १ ५ २ ४ ५ ४ ५ १
हधर्म्मणा१ ॥(१) पव । मा३ना । नायि । ईया । तो

२ १ १र ५ २र ३र २
शा१सा२यि । रायिꣳसोम । आवौ३हो । वाहायि ।

---

* ऊ० गा० ४प्र० २ख० १७सा० ।

† "गायत्रीभासम्"—इति ख० पु० ।

१र २ १ २ ३ ४ ५ १र २र ३र २ १
स्वापयात्। निगूतः। स्नेहयन्त्वा। औहोवाहाइहोयि।

२ २ १र २ १र २ २ ४
दूहा। अपामित्रा२। अपाचि। ता३४३। आ२चा

५ग्रिताइ५६ः ३) ॥ १० * ॥ [२]

२ र १ १ २र र १
॥ वार्त्रतुरम्॥ अयापवावा पावस्वैना। वनूर३

२ १र र २ १ २ १ २ १
नो। मा२अत्वइन्द्रोपरसि। प्रथा२३न्वा। व्रधस्चिद

२ १ २ ३ ४ १ २ १
स्य। वा। तोनाज२३४नोम्। पुरु। मायि। धास्वि

१ ३ २ ५ २
त्ताका२३। वा२३यिना३। रा३४५धोइहायि॥१ उत

१ २ १ २ र १ २ १ र र
नओवा। नापवया। पवा२३स्वा। अधिश्रुतेश्रवायि

२ १ २ १ २ १ २ र १ र २
य। स्यना२३यिर्थायि। पएष्ट२मदस्वानं। गू। तोवा

३ ५ १ २ १ १ ४
सू२३४नो। वृत्राम्। ना। पाकन्धूना२३। वा२३द्रा

२ ५ २ र १ २ १ १ र
३। णा३४५यो३हायि॥२) महोमओवा। स्या२पना।

१ २ १र १ र र र र १ २
मप्रू२३पायि। मा२अत्वेवापृश्रवा। वधा२३चायि।

* क० गा० २प्र० २अ० १०सा०।

ईया२म्। इन्दो२३। सा२मू२३४औहोवा। द्रमा
विश्वा१ ॥(२) अप। घ्ना३न्पा। वा। ईया। सायि
मार्द्धा२ः। क्रातुवित्सो। म। मौ३हो। वाहा। त्सरा२ः।
नुदा२३। स्वा२दा२३४औहोवा। वयुञ्जमा१म् (३)

॥ १८ * ॥ [२]

॥ काचीवन्तम् † ॥ पवस्वा३देवआयुषाक्। इन्द्रा
ङ्गच्छ। तुतेमदाइः। ओ३४। हाहोयि। वायूमा२
३रो। हर्धौहोयि। औहो२३४वा। मा५णो६हायि ॥(१)
पवमाननितोशमायि। रयायिऌसोम। श्रवायियाइम्।
औ३४। हाहोयि। इन्दोसा२३म्। द्रमौहोयि। औ
हो२३४वा। वा५यिशो६हायि ॥(२) अपघ्ना३न्पवसेमृ
धाः। क्रतूवित्सो। ममत्सराइः। ओ३४। हाहोयि।

* ऊ० गा० ४प्र० २ख० १८सा० ।

† "काचीवतम्"—इति ख० पु० पाठः ।

१ र २  १ २  १  २ ३  ५  १
अस्वापयन्निगुतः । स्ने । हायार३४च्चा । अपा । मा

२ १  १ ४  २
यि । चा९अपाचार३यि । लो२३आ३ । चा२४५यितो

५
६हायि(३) ॥ १* ॥ [३] २१

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

षष्ठः खण्डः ॥ ६ ॥

---

अथ सप्तम-खण्डे—

प्रथमतृचे।, प्रथमा ।

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ र ३क २र
अग्ने त्वन्नो अन्तमउतत्राताशिवोभुवोवरूथ्यः ॥ १ ॥ ‡

हे "अग्ने !" "वरूथ्यः" वरणीयः सम्भजनीयः । यद्वा, वरूथैः परिधिभिर्वृतः त्वं "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भुवः" भव । "उत" अपिच "त्राता" रक्षकः "शिवः" सुखकरश्च भव ॥

"भुवः"-"भव"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० २३प्र० २ख० १सा० ।

। 'यज्ञायज्ञियमग्निष्टोमसाम'—इति वि० ।

‡ ऋ० आ० ५, २, २, २ (२भा० ८९८ पृष्ठे) = ऋ० वं० ४, १, १६, १ ।

१ २ ३र २ ३र १ ५ ४
नुदास्वार३दाथि। वायौहोयि। औहो२३४वा। जा
५
पूनोई२हायि(३) ॥ १९ * ॥ [३]

३ ४ ५ र४ ५र १ १
॥ गायत्रासितम् † ॥ पवस्वदेवआ। इया३४३ई३४
१ २ २ १ १
या। युषागिन्द्रङ्गच्छतौ२। हौ२। ऊवा२यि। मा
१र २ १ र २ १ २ १ २
दा२ः। वायू३ऌहौयि। आरो३हो। हधर्म्मा२३णा
१ ४ ५र ४ ५र २ २ ५ १
३४३ ॥(१) पवमाननितौ। इया३४३ई३४या। ग्रसायि
र २ १ १ १
रयिऌसोमश्रवौ२। हौ२। ऊवा२यि। आया२म्।
२ १ २ १ २ १र २
इन्दो२हौयि। समू३हो। द्रमावा२३यिशा ३ ४ ३ ॥(२)
४ १ ४ ५ र २ २ ५ १ र
अपघ्नन्पवसे। इया ३ ४ ३ई३४या। म्रधाःक्रतु वित्सोम
१ १ १ २ १
मौ२। हौ२। ऊवा२यि। त्मारा२ः। नुदा३हो
र २ १ २ १ २ १
यि। स्वादा२हो। वयुञ्जा२३ना३४३म्। ओ२३४५ई।
डा(३) ॥ २० ‡ ॥ [४]

* ऊ० गा० ४प्र० २ख० १९सा०।
† "वाशिष्ठमासितम्"—इति ख० पु०।
‡ ऊ० गा० ४प्र० २ख० २०सा०।

अथ द्वितीया।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमोरयिन्दाः ॥ २* ॥

"वसुः" वासकः "अग्निः" सर्वेषामग्रणीः "वसुश्रवाः" व्याप्तान्नस्त्वं† "अच्छ" आभिमुख्येन "नक्षि" अस्मान् व्याप्नुहि। "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "रयिं" पश्वादिलक्षणं धनं "दाः" अस्मभ्यं देहि ‡॥

"द्युमत्तमः"-"द्युमत्तमम्"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
तन्त्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः ॥३¶॥ २२

हे "शोचिष्ठ" अतिशयेन शोचिष्मन्! "दीदिव" स्वतेजोभिर्दीप्ताग्ने! "तं" "त्वा" त्वां "सुम्नाय" सुखाय [सुम्नमिति सुखनामैतत् (निघ० ३, ६, १७)] तदर्थं "सखिभ्यः" समानख्यातिभ्यः पुत्रेभ्य § सुखार्थञ्च "नूनम्" "ईमहे" याचामहे ॥ ३ ॥ २२

---

* ऋ० वे० ४, १, १६, २।

† 'वसुश्रवाः—अन्नेन धनेन च सम्पन्नः'—इति वि०।

‡ 'रयिन्दाः—रयिं धनं ददातीति रयिन्दाः,—इति वि०।

¶ ऋ० वे० ४, १, १६, ४।

§ 'सखिभ्यः-ऋत्विग्भ्यः'—इति वि०।

॥ ऐडसैन्धुक्षितम् ॥ पवस्वदो। हायि। वआायर २ ३षाक्। इन्द्रञ्चक्रतुता१यिमा३दाः। वायुमारोर३४ हायि। हाधा३हा। मणा। औ३होवा॥(१) पव मानो। हायि। नितोभा२३सायि। रयिॅंसोमश्रवा१ आ३याम्। इन्दोसमो२३४हायि। द्रामा३हायि। वि शा। औ३होवा॥(२) अपघन्यो। हायि। वमैमा २३र्द्धाः। क्रतुवित्सोममा१त्सा३राः। नुदस्वादो२३४हा यि। वायू३ॅं हायि। जनाम्। औ२३होवा। हो५ इ। डा(३)॥ १* ॥ [५] १५

अथ तृतीयसूक्ते तृचात्मके—

अभीनोवाजसातममिति प्रतीकम्,

अभीनोवाजसातमं०॥ १† ॥

सा चाम्नाता (६, २, १, ५=२भा० १६१पृ०) व्याख्याता च॥ १ ॥

---

* ऊ० गा० १०प्र० १ख० १भा० ।

† छ० आ० ६, ०, १, ४ (२भा० १६१पृ०)=ऋ० वे० ७, ४, १३, १।

॥ गूर्द्दम्॥ ओग्नायि। त्वन्नो२३आ। ऊम्मा२३। ता२३४माः। उतत्राताशिवोभुवा२३४५ः। शिवोभुवा२३ः। वरोवा। था५योऽ६हायि॥(१) वाह्वः। अ। ग्नायिर्वा२३सू। ऊम्मा२३। आ२३४वाः। अच्छानक्षिद्युमत्तमा२३४५ः। द्युमत्तमा२३ः। रयोवा। आ५यिन्दोऽ६हायि॥(२) तान्त्वा। शो। चायिष्ठा२३री। ऊम्मा२३यि। दी२३४वाः। सुम्नायनूनमीमहा२३४५यि। नमीमहा२३यि। सखोवा। भा५योऽ६हायि(३)॥१८*॥[१]

सत्रासाह्वीयम्॥ अग्ना३४यि। त्वन्नोअन्तमः। ओईवा। उतत्रा२ता। शा२यिवो। भु२३वाः। वरौ३हो। वाहा३४३यि। था२३४योऽ६हायि॥(१) वह्व३४ः। अग्निर्वसुश्रवाः। ओईवा। अच्छाना२हायि। द्यू२मा।

* ऊ० गा० ७प्र० २ख० १८सा०।

अथ द्वितीया।

३ १ २ ३ १र २र ३ १ २ ३ १ २
वयन्ते अस्य राधसो वसो वसोपुरुस्पृहः।
१ २र ३ १र २र ३ १ २
निनेदिष्ठतमा इषः स्याम सुम्ने ते अध्रिगो॥ २ *॥

हे "वसो" वासयितः! सोम! "अस्य" एतादृशस्य "ते" तव "राधसः" धनस्य "पुरुस्पृहः" बहुभिः स्पृहणीयस्य "वसोः" वासकस्य त्वदीय-दीयमानस्य वयं नितरां "नेदिष्ठतमाः" अत्यन्त-मन्तिकतमाः "स्याम" भवेम॥ २॥

अथ तृतीया।

२ ३ १ ३ १ २ ३ २ ३ ३ १ २
परिस्यस्वानो अक्षरदिन्दुरव्यो मदच्युतः।
२ ३ २ ३ १ २ ३ २ ३ १र २र ३ २
धारायऊर्द्धो अध्वरे भ्राजा नयाति गव्ययुः॥ ३†॥ १६

"गव्ययुः" गोकामः यद्वा क्षीरादि कामयमानः "ऊर्द्धः" समुच्छ्रितः सर्वेषां मुख्यो "यः" सोमः "भ्राजा न" यथा भ्राजमानया दीप्तया अन्तरिक्षे गच्छति तद्वत् दीप्त्या सह "अध्वरे" यज्ञे "धारा" स्वकीयया धारया "याति" गच्छति। "स्वानः" सुवानः अभिषूयमाणः सः "इन्दुः" सोमः "मदच्युतः" मदार्थं

---

* ऋ० वे० ७, ४, २३, ५।

† ऋ० वे० ७, ४, २३, ६।

२ १ ५ १र १र २ १ ५
तार३माः । रयौ३ह्वो । वाहा३४३यि । आर२३४यिन्दो

५ ३ २ र र ५ र
६हायि ॥(२) तन्वा३४ । शोचिष्टदीदिवः । ओ६वा ।

२ १र १ १ २ १ ५ १र
सुम्नाया२नू । ना२मायि । मा२३हायि । सखौ३ह्वो ।

१र २
वाहा३४३यिई६हायि(३) ॥ १५ * ॥ [२] २२

अथ द्वितीय-तृचे† —

प्रथमा ।

३ १उ २ १ २ ३१ २ ३ १२ ३ २
इमानुकम्भुवनासीषधेमेन्द्रश्चविश्वेचदेवाः ॥ १‡ ॥

"इमा" इमानि परिदृश्यमानानि भुवनानि "नु" क्षिप्रं "सीषधेम" साधयेम वशीकरवाम । "कम्"—इति पूरकः [यद्वा, इमानि सर्वाणि भूतजातानि अस्मभ्यं कं सुखं सीषधेम साधयन्तु ; पुरुषव्यत्ययः (३,१,८५) ] । "इन्द्रश्च" "विश्वे" सर्वे अन्ये "देवाः च" स्तुत्या प्रीत्या "इमम्" अर्थम् साधयन्तु ॥

"सीषधेम"-"सेषधाम"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १२प्र० २खं० १५सा० ।

† 'गौतमस्य भद्रम्'—इति वि० । साम्नैतद्दूह्यगानस्य ।

‡ ऋ० आ० १, ३, ३, १ (१भा० ६०३पृ०)=ऋ० वे० ८, ८, १५, १ ।

वेदैः प्रेरितः सन् "अव्ये" अवि भवे पवित्रे "पर्यचरत्" परितः चरति ।

"अचरत्"-"अचाः"—इति पाठौ ॥ २ ॥ १६

५ र २र १ ४ र ५
॥ गौरीवितम्* ॥ अभी । नोवा३ । जसातमाम् ।
१ १ र २ ४
रयिमर्षशतस्पृहा२३म् । आयिन्दोसहा३१२३ । सभा
१ १ ४ ५ ४
पूर्णसाम् । तूविद्युम्ना३१२३म् । विभोवा । सा५हो६
५ ५ २र २ ४ ५ १र र
हायि ॥ (१) वयम् । तेआ३ । स्यराधसाः । वसोर्वसो
१ र १ ४ १
पुरुस्पृहा२३ः । नायिर्नेदिष्ठा३१२३ । तमा५इषाः । स्याम
२ ४ ५ ४ ५ ५
सुम्ना३१२३यि । तओवा । धा५यिगो६हायि ॥ (२) परि ।
२ २ ४र ५ १ र १
स्यस्वा३ । नोअक्षरात् । इन्दुरव्येमदच्युता२३ः । धा
र २ ४र १ र २ ५
रायऊ३१२३ । ध्वौआ५ध्वरायि । आजानया३१२३ । ति
५ ४ ५
गोवा । व्या५यो६हायि(३) ॥ ३ † ॥ [१]
३ र २र १ ४र र ५
॥ ऐडकौत्सम् ॥ अभोहोना२३ । वाजसातममोया ।

---

* "महागौरीवितम्"—इति ख० पु० पाठः ।

† ऊ० गा० ५प्र० १ख० १सा० ।

अथ द्वितीया।

२ १ २ ३क २र ३ १ २ ३ १र २र ३ १ २
यज्ञञ्चनस्तन्वञ्चप्रजाञ्चादित्यैरिन्द्रःसहसीषधातु ॥२*॥

"नः" अस्माकं "यज्ञं" ज्योतिष्टोमादिकञ्च यागं "तन्वं" शरीरञ्च "प्रजां" पुत्रादिकाञ्च "आदित्यैः" अदिति-पुत्रैः अन्यैर्देवैः सह वर्त्तमानः "इन्द्रः" "सीषधातु" साधयतु॥

"सहसीषधातु"-"सहचीक्लपानि"—इति पाठौ॥ २॥

अथ तृतीया।

२ ३उ १ १ २ ३ १ २ ३ १ २ ३ १ २
आदित्यैरिन्द्रःसगणोमरुद्भिरस्मभ्यम्भेषजाकरत्॥३†॥२३

"आदित्यैः" अदिति-पुत्रैः मित्रादिभिः "मरुद्भिः" च "सगणः" गण-सहितः "इन्द्रः" "अस्माकम्" अस्मभ्यम् "भेषजानि" औषधानि "करत्" करोतु॥

"भेषजाकरत्"-"भूत्ववितातनूनाम्"—इति पाठौ॥३॥२३

* ऋ० वे० ८, ८, १५, २।

† ऋ० वे० ८, ८, १५, ३।

२ १ १२ १ २ १ १ १

रयिमर्षशतस्पृहम्। आयिन्दोसच्च। स्वभर्णा२३साम्।

१२ २ १ २ २ १२ २

तूवा३द्दायि। द्यू म्ना३ऽ् द्दायि। विभासा२३हा३४३म्॥(१)

३ २२ १ ४ ५ १२२ १ २ १ १

वयऽ् द्दोते२३। अस्यराधसईया। वसोर्वसोपुरुस्पृद्दः।

१ २ २ १२ २ १ २ २ १ २

नायिनेदिष्ठ। तमाआ२३यिषाः। स्यामा३हायि। मून्ना

२ २ १ २ ३२ २ १

३यिहायि। तेअधा२३यिगा३४३उ॥(२) परीहिस्या२३ः।

४२ २ ५ १ २ १ २२ १ २ १ २ २ २

स्वानोअक्षरद्दीया। इन्दुरव्यमदच्युतः। धारायऊ।

२ १ २ १ २ २ १ २ २ १

ध्वोअध्वा२३रायि। भ्राजा३द्दा। नाया३हा। तिगव्या

२ १

२३यू३४३ः। ओ२३४५ई। डा(३)॥ ४ *॥ [२]

२ १२ २ २१ १२ २ १

॥ भ्रुद्दाभ्रुद्दीयाद्यम्† ॥ अभीनोवाजसातमाम्। रयि

२१ २ १२ २ १ २ १

मर्षशतस्पृ२३हाम्। इन्दोसद्दस्रभर्णा२३साम्। तुवा

२ ३२ २ ५२ २ ३ १

यिद्यू२३म्ना३म्। वा२यि। भामा३४औहोवा। द्दा२

१११ २१ २ २ १२ २ १ २ २ २१ २

३४५म्॥(१) वयन्तेअस्यराधसाः। वसोर्वसोपुरुस्पृ२३द्दाः।

---

* ऊ० गा० ५प्र० १ख० ४सा०।

† "पदान्तभ्रुद्दाभ्रुद्दीयाद्यम्"—इति ख० पु०।

अथैकगीत्मकं सूक्तं प्रवोर्चोपेति, चतुरक्षरात्मिका*
काचिदियमृग्रूपा ; यथा बह्वृचानां
"भद्रन्नोअपिवातयमनः"—इत्येक
एव पाद ऋगात्मकश्च
तद्वत् † ॥

१ २र
प्रवोर्चोप ॥ १ ॥ २४

हे ऋत्विग्यजमानाः ! "वः" यूयम् "उप" समीपे "प्रार्च" प्रकर्षेणेन्द्रं पूजयत ॥ १ ॥ २४

॥ उद्वंशपुत्रम् ॥ प्रवाः । आयिन्द्रायवृत्रहान्तमा
२३या । वायिप्रायगाथङ्गा१या२३ता । याञ्जुजौवा३ । उप् । षा२रतो३५हायि ॥(१) अर्चा । तामर्कम्मरु

* वस्तुतस्तु "प्रवोर्चोप"—इति नैषा चतुरक्षरात्मिका ऋक् प्रत्युत छन्दआर्चिकश्रुतायाः "प्रवइन्द्रायबृहन्तमाय (५, १, १० । १भा० ८६५पृ० )"—इत्यस्याः प्रतीकं "प्रवः"—इति, किञ्च "अर्चन्त्यर्कम्मरुतःस्वर्का (५,०,१,९ । १भा० ८६४पृ० )"—इत्यस्याः प्रतीकम् "अर्च" —इति, तथैव "उपप्रक्षेमधुमतिक्षियन्तः ( ५, १, १, ८ । १भा० ८६३पृ० )"—इत्यस्याः प्रतीकम् "उप"—इति, एवमेव सम्पन्नं "प्रवोर्चोप" —इति, ऊह्यगान-तृतीयप्रपाठकान्तिमसुदंश पुत्रसाम ( १००पृ० ) सामैवाव बद्धमानमन्यथा तस्य मूलीभूत-तृचस्यालाभ एव सर्वथा स्यात् । अन्यत्राप्यदर्शनात् ।

† 'उद्वंशपुत्रोऽच्छावाकसाम । "प्रवइन्द्राय"—"अर्चन्त्यर्कम्"—"उपप्रक्षे"— एषस्तृचश्छन्दसिका-भाष्ये उक्तार्थः'—इति वि० ।

१ र  २ १र  २  र १  २  १
निनेदिष्ठतमा आ२३यिषाः । स्यामसू२३म्ना३यि । ते२।
२ २  ५र र  ३ १ १ १ १  १ २ १ २र १र  २
अध्रा३४औहोवा । गा२३४५उ ॥(२) परिस्यस्वानो अक्ष
१  र २ १  २  १र र  र ५र १
रात् । इन्दुरव्येमदच्यू२३ताः । धारायऊर्ध्वो अध्वा२३
२  र १र  २  १  ३ २  ५र र
राथि । म्राजाना२३या३ । ता२यि । गव्या३४औहो
३ १ १ १ १
वा । यू२३४५ः३ ॥ ५ * ॥ [३]

॥ क्रौञ्चाद्यम् ॥ २ र १र र  अभीनावौहो । ११र १र जासातमाम् । १ र
१ २  ४  २ र १ र
यिमर्षा३ । भ्राता ३ स्पृ५हा६ ५ ६म् । इन्दोसद्यौहो ।
२र १  २  १  २  ४
स्वाभर्णसाम् । तुयिद्युम्ना३म् । वायिभा३सा५हा६५६म् ॥(१)
२ १ र  २र १र  २ र  १ २ ४
वयन्त औहो । स्याराधसाः । वमोर्वमा३उ । पूरू३स्प
२ र १ र  २र १र  २र
५हा६५६ः । निनेदिष्ठौहो । तामाइषाः । स्यामसु
१ २  ४  २  १र
म्ना३यि । ते आ३ध्रा५यिगा६५६उ ॥(२) परिस्यस्वौहो ।
२र १  २  १ २
नोअक्षरात् । इन्दुरव्या३यि । मादा३च्यू५ता ६ ५ ६ः ।

* क्र० गा० ५प्र० १अ० ५मा० ।

७ २ १ र २ १ १ १ ऽ
ताःसुवार३र्क्काः। आस्तोभतिश्रुतो१यू३वा। स आ३उ
२ २ १ २ १
वा३। उप्। आ।ऽ२यिन्द्रो३५हायि॥(२) उपा। प्रा
र ७ २ १र २२ २
च्चेमधुमतायिचिया२३न्ताः। पूष्ये मरयिन्धा१इमा३हा
१ ऽ २ २ १
यि। तआ३उवा३। उप्। आ।ऽ२यिन्द्रो३५
२
हायि(३)॥१८*॥[१]२४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
सप्तमः खण्डः † ॥ ७॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः॥ ७॥

॥ इति चतुर्थस्यार्द्धः प्रपाठकः॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे सप्तमोऽध्यायः‡॥ ७॥

---

* ऊ० गा० ३प्र० २अ० १८सा०।

† 'षष्ठमश्चः समाप्तः। इन्द्रानकल्पः समाप्तः'—इति वि०।

‡ 'इति चतुर्थप्रपाठकस्य प्रथमार्द्धः'—इति वि० पदकारादिसम्प्रग्रन्थसम्मतश्च।

धारायऔहो। ध्वौअध्वरायि। आजानया३। तायि
गा३व्या५यू६५६:(३) ॥ ६ * ॥ [४]

॥ रयिष्ठम् ॥ अभीनोवा। जसाता३माम्। औ३
हो३वा। रयिमर्षशतस्पृहा२३४५म्। रयिमर्षा। शता
स्पृ३हाम। औ३हो३वा। इन्दोसहस्रभर्णसा२३४५म्।
इन्दोसहा। स्रभार्णा३साम्। औ३हो३वा। तुविद्यु।
म्नंविभासहा२३४५म्। तुविद्युम्नाम्। विभासा३हाम्।
औ३हो३वा ॥(१) वयन्तेआ। स्यराधा३साः। औ३
हो३वा। वसोर्वसोपुरुस्पृहा२३४५ः। वसोर्वसाउ
पुरुस्पृ३हाः। औ ३ हो ३ वा। निनेदिष्ठतमाइषा१ः।
निनेदिष्ठा। तमाआ३यिषाः। औ३हो३वा। स्याम
सुम्नेतेअध्रिगा२३४५उ। स्यामसुम्नायि। तेआध्रा३यि

* ऊ०गा० ५प्र० १अ० ६मा०।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ८ ॥

## ॥ अथाष्टमाध्याय आरभ्यते* ॥

तत्र,

प्रकाव्यमिति प्रथमे खण्डे—

द्वादशर्चे† प्रथमे सूक्ते—

प्रथमा ।

१ २र ३ १ २ ३ २
प्रकाव्यमुशनेवब्रुवानो

३ २ ३ १ ३ १ २
देवोदेवानाञ्जनिमाविवक्ति ।

१ २ १ १ २ १ २
महिव्रतःशुचिबन्धुःपावकः

३ १ २ ३ २ ३र २र ३ १ २
पदावराहोअभ्येतिरेभन् ॥ १ ‡ ॥

"उशनेव" एतन्नामक ऋषिरिव "काव्यं" कवि-कर्म स्तोत्रं "ब्रुवाणः" उच्चारयन् "देवः" स्तोता "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि "प्र विवक्ति" प्रकर्षेण ब्रवीति [ वच परि-

---

* 'इदानीं छन्दोमा वक्तव्याः । ते च त्रयः व्यूढच्छन्दस्कानुष्टुभः प्रतिपदो भवन्ति त्रिष्टुभां स्थाने जगत्यः जगतीनां गायत्र्यः । ब्राह्मणेन व्यपदेश उक्ताः'—इति वि० ।

† 'प्रकाव्यमुशनेव ब्रुवाण इति द्वादशर्चो भवति । चतुर्विंशस्तोमिकश्छन्दमहः' —इति वि० । द्वादशार्चः खण्ड इति यावत् ।

‡ ऋ० आ० ६, १, ४, २ ( १ भा० १०९४० )=ऋ० वे० ७, ४, १२, १ ।

गा। औ३हो३वा॥(२) परिस्वस्वा। नोत्र्याचा३रात्।
औ३हो३वा। इन्दुरव्येमदच्युता२३४५ः। इन्दुरव्यायि।
मदाच्यु३ताः। औ३हो३वा। धारायऊर्ध्वाअध्वरा१यि।
धारायऊ। ध्वोआध्वा३रायि। औ३हो३वा। भ्राजा
नयातिगव्यय१ः। भ्राजानया। तिगाव्या३यूः। औ३
हो३वा। औ३हो३वा। ई३या। ई३या३४। हा।
हाउवा३। ऊ३२३४पा(३)॥ ७ *॥ [५]

॥ औदलम्॥ अभीनोवा। जामा२तमाम्। रयि
मर्षा३। शातस्प२३४हाम्। इदोसद्दा। स्त्राभा२र्णि
साम्। तुवायिद्य२३म्ना३म्। वा२३यिभा३। सा३४५
हो६५६हायि॥(१) वयन्तेआ। स्पारा२धसाः। वसो
र्वसा३उ। पूरुस्प२३४हाः। निनेदिष्ठा। तामा२इषाः।

* ऊ० गा० ५प्र० १अ० ७मा०।

भाषणे ( अदा० प० ) व्यत्ययेन विकरणस्य श्लुः ( ३, १, ३८ ), "बहुलञ्छन्दसि ( ७, ४, ७८ )"—इत्यभ्यासस्येत्वम् ], "महिव्रतः" प्रभूतकर्म्मा, "शुचिबन्धुः" [ बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा ] दीप्ततेजस्कः, "पावकः" पापानां शोधकः; "वराहः" वरञ्च तदहश्च वराहः [ "राजाहः सखिभ्यष्टच् ( ५, ४, ९१ )"—इति टच् समासान्तः ; तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान् ; अर्श आदित्वान्मत्वर्थीयोऽच् ( ५, २, १२७ ) ] तादृशः सोमः "रेभन्" रेभनं शब्दं कुर्वन्, "पदा" पदानि पात्राणि "अभ्येति" अभिगच्छति ; यद्वा, यथा कश्चन वराहः पदा पादेन भूमिं विक्रममाणः शब्दं करोति तद्वत् ॥ १ ॥

अथ द्वितीया।

१२ २ ३ १ २ ३ २३ २
प्रहꣳसासस्तृपला॰वग्नुमच्छा॰

२३ १ १ २
मादस्तं वृषगणा अयासुः।

३ २३ १ २ २ १ २
अङ्गोषिणꣳ॰पवमानꣳसखायो

३ १ २ ३ १२ २२ ३ २
दुर्मर्षं वाणम्प्रवदन्ति साकम्¶ ॥ २ § ॥

* "तृपलं"—इति
† "मन्युम्"—इति
‡ "आङ्गूष्यं"—इति
¶ "साकं प्रवदन्ति वाणम्"—इति च
} ऋ०-पाठाः।

§ ऋ० वे० ७, ४, ११, २।

२र १ २ १ ४ २ ५
स्यामसू२३म्ना३यि । ते२३आ३ । धा३४५यिगो६हायि ॥(२)

१ २ १ १ २ १ २ १ २
परिस्यस्वा । नोआ२स्वरात् । इन्दुरव्या ३यि । मादृ

३ ५ १र २र १ १ २र १र
च्यू२३४ताः । धारायऊ । र्छ्वोआ२र्छ्वरायि । भ्राजाना

२ १ ४ २ ५
२३या३ । ता२३यिगा३ । व्या३४५यो६हायि(३) ॥८*॥ [६]

३ १ २ ४र ५र २
॥ श्यावाश्वम् ॥ अभा३१यि । नो३वा । जसा । ता

४ ५ १ २ १
३मम् । एहिया । रा । यिमर्षणा । त । स्पृहा२म् ।

१र २ १ २ ४ ५ २र
एहिया२ । इन्दोमहाम्ना३भा३ । णा२३४माम् । ऐहा

१र १ २ ४ २
२यि । एहिया२ । तुविद्युम्नावा३यिभा३ । सा३४५हो

५ ३ २ २ ४ ५र २ ४
६हायि ॥(१) वया३१म् । ते३अ । स्यरा । धा३मः ।

५ १ २ २ १ १ १र
एहिया । वा । सोवसोयू । रु । स्पृहा२ः । एहिया

२ १ २ ४ ५ २र
२ । निर्निदिष्ठाता३मा३ः । आ२३४यिपाः । ऐहा२यि ।

१र २ १ २ ४ २
एहिया२ । स्यामसुम्नायिते३आ३ । धा३४५यिगो६

* ऊ० गा० ५प्र० १ख० ८मा० ।

"हंसास:" शत्रुभिर्हन्यमाना हंसाइव आचरन्तो वा* "वृषगणाः" एतन्नामका ऋषयः† "अमात्" शत्रूणां बलात् त्रासिताः सन्तः "तृपला" तृपलं [ सुपां सुलुगिति सोराकारादेशः ( ७, १, ३९ )। तृपल-शब्दः चिप-वाची, तदुक्तं यास्केन —"तृप्रप्रहारी चिप्रप्रहारी ( निरु० नै० ५, १२ )"—इति ] चिप्रं प्रहारिणं‡ "वग्नुम्" अभिषव-शब्दम्¶ "अच्छ" अभिलक्ष्य§ "अस्तं" यज्ञगृहं "प्रायासुः" प्रायासिषुः प्रगच्छन्ति। ततः "सखायः" स्तुत्य-स्तोतृत्व-लक्षणेन सम्बन्धेन सखिभूताः स्तोतारः "अङ्गोषिणं" सर्वैरभिगन्तव्यं‖ [ यद्वा, अङ्गोषिणं स्तोत्रार्हं ], "दुर्मर्षं" शत्रुभिः दुर्धरं दुःसहम्; एवंविधं "पवमानं" सोमम् उद्दिश्य "वाणं" वाद्यविशेषं** "साकं" सहैव "प्र वदन्ति" प्रवादयन्ति तदुपलक्षितं गानं कुर्वन्तीत्यर्थः॥ २॥

---

* 'हंसासः—आदित्य-रश्मयः'—इति वि०।

† 'वृषगणाः—मेलकार मङ्घाताः'—इति वि०।

‡ तृपला—लोक-त्रयस्य पालकाः'—इति वि०। "सोमो वेन्द्री वा"—इति निरु० नै० ५, १२।

¶ 'वग्नुं—बलम्'—इति वि०।

§ 'अच्छ—आप्नुम्'—इति वि०।

‖ 'अङ्गोषिणम्—उष दाने दीप्तौ च * * * दीप्तं सोमं'—इति वि०।

** 'वाणं—वादित्र-विशेषम्, यथा वाणस्य शततन्त्रीकस्य जायते शब्दः तद्वत् सोमस्य जायमानस्य महान् शब्दः'—इति वि०।

हायि ॥(१) परा३१यि। स्या३स्ना। नौग्र। चा३रत्। एहिया। आयि। दुरव्येमा। द। च्युता२:। एहिया२। धारायऊर्द्ध्व३आ३। धा२३४रायि। ऐहा२यि। एहिया२। भ्राजानयाता३यिगा३। व्या३ ४ ५ योऽ६हा यि(३) ॥ १५ * ॥ [७]

॥ आन्धीगवम् ॥ अभीनोवाजसा१तामाम। रयिम। षशा२३ता। ऊम्मा २१ऽ२। स्पृहमिन्दोसहस्त्रभर्णसा२ ३४५म्। तुवा३उवा। द्यु२म्नाम। वा२३यिभा। स हास्। औ२३होवा ॥(१) वयन्ते अस्यरा१धामा:। वमो वं। सोमू२३रू। ऊम्मा २१ऽ२। स्पृहानिनेदिष्ठतमा द्विषा१:। स्यामा३उवा। सू२म्नायि। ते२३आ। भ्रि गा। औ३होवा ॥(२) परिस्यस्वानो आ१चारात्। इन्दु

---

* ऋ० मा० ९२७० १ष० १५मा० ।

अथ तृतीया ।

१ २ ३ १ २ ३ २उ
सयोजत*उरुगायस्यजूतिं

१ १ २ ३ १र २र
वृथाक्रीडन्तम्मिमतेनगावः ।

१ १ २ ३ १ २ ३
परीणसङ्कृणुतेतिग्मशृङ्गो

२ ३ २ ३ १ २ ३ १ २ ३ १ २
दिवाहरिर्ददृशेनक्तमृज्रः ॥ ३ † ॥

"सः" सोमः "उरुगायस्य" बहुभिः स्तुत्यस्य आत्मनः‡ "जूतिं" गतिं¶ "योजते" युनक्ति अन्तरिक्षे प्रेरयति । "वृथा क्रीडन्तम्" अनायासेन विहरन्तं गच्छन्तं सोमं "गावः" अन्यो गन्तारः "न मिमते" न परिच्छिन्दन्ति मातुं न शक्नुवन्तीत्यर्थः । किञ्च "तिग्मशृङ्गः" [ शृणवन्ति हिंसन्ति तमांसीति शृङ्गाणि तेजांसि ] तीक्ष्ण-तेजस्कः "परीणसं" [ बहुनामैतत् ( निघ० ३, १, ७ ) बहुविधं तेजः§ "कृणुते" करोतु अन्तरिक्षे वर्त्तमानो यः सोमः "दिवा" अहनि "हरिः" हरितवर्णः "ददृशे" दृश्यते

* "सरंहत"—इति ऋ० पाठः ।

† ऋ० वे० ७, ४, १२, ३ ।

‡ 'उरुगायस्य—बहुविधस्य गानस्य'—इति वि० ।

¶ 'जूतिं—प्रतिशब्दम्'—इति वि० ।

§ 'परीणसं—परि समन्तात् गावो नीयन्ते परीणसः, तम्'—इति वि० ।

र २ १ १ र र २र१२र१र
र। व्येमा२३दा। ऊम्मा२१२। च्युतोधारायऊर्द्धौ
२ ३ २ २ २ १ २
अध्वरा१यि। भ्राजा३उवा। ना२या। ता२३यिगा।
१ ४ ५ ४
व्ययूः। औ२३होवा। हो५ई। डा(३)॥१६*॥[८]
२ र र र २र १ २
॥ निषेधम्† ॥ अभीनोवाजा३सातमाम्। रयायिम
१ २ १ १२ १ २ ४ ५ २
र्षा। शतस्पृहा२म्। इहा३। आयिन्दो३साहा। हा
३ ५ २ १ २ १२ १२ ४
हो२३४हा। स्रभर्णा२३साम्। इहा३। तुवा३यिद्यु
५ २ ३ ५ ३ २ ४
म्नाम्। हाहो २ ३ ४ हा। विभा३सा५हाई५६म्॥(१)
२ र २र १ २ १ २ १
वयन्ते अस्या३रा३धसाः। वसोर्वसा३। पुरुस्पृहा२ः।
१ २ १ २ ४ ५ २ ३ ५ २ र १
इहा३। नायिने३दायिष्ठा। हाहो२३४हा। तमाआ
२ १ २ १ २ ४ ५ २ ३ ५
२३यिषाः। इहा३। स्यामा३मूम्नायि। हाहो२३४हा।
३र २ ४ २ र २
तेआ३धा५यिगा६५६उ॥(२) परिस्यस्वानो३अचरात्।
१ २ १ २ १ १ २ १ २ ४ ५
इन्दुरव्यायि। मदच्युता२ः। इहा३। धारा३याऊ।

* ऊ० गा० १२प्र० १ख० १६सा०। † "निषेधः"— इति ख० पु० पाठः।

न प्रकाशत इत्यर्थः, "नक्तं" रात्रौ तु "ऋज्रः" ऋजुगामी* विस्पष्टः प्रकाशयुक्तो दृश्यते† ॥ [ददृशे—दृशेः कर्मणि लिटि रूपम् ॥ ३ ॥

अथ चतुर्थी।

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रस्वानासोरथाइवार्वन्तोनश्रवस्यवः।
१ २ ३ १ २
सोमासोरायेअक्रमुः ॥ ४‡ ॥

"स्वानासः" अभिषववेलाया मुपरवेषुण शब्दं कुर्वन्तः "सोमासः" सोमाः "रथा इव" यथा शब्दं कुर्वन्तो रथाः तथा, "अर्वन्तो न" यथा शब्दं कुर्वन्तो अश्वाः तथा, "श्रवस्यवः" अस्मभ्यः सकाशादन्नमिच्छन्तो "राये" यजमानानां धनाय "प्राक्रमुः" प्रगच्छन्ति ॥ ४ ॥

अथ पञ्चमी।

२ ३ १ २ ३ १ २ ३ १र २र
हिन्वानासोरथाइवदधन्विरेगभस्त्योः।
१ २ ३ १ २
भरासःकारिणामिव ॥ ५ § ॥

* 'ऋज्रः—ऋज गतौ नक्रङ्गो भवति'—इति वि०।

† 'एतदुक्तं भवति—दिवाभिषिक्तः सोमो रात्रिपर्यायेषु पुनर्निषिच्यते, योऽभिषवं करोति तस्यायं दोषः सम्पद्यते'—इति वि०।

‡ ऋ० वे० ९, ७, २५।

¶ यूपस्य गर्ता उपरवा उच्यन्ते। तद्विधायकञ्चैतत् कात्यायन-सूत्रम्—"दक्षिणस्यानसोऽधः प्रउगं खनत्युपरवानभ्रादि करोत्यवटवदिति ( ८, ४, २५ )"। यथा यूपस्यावटः क्रियते तथावाप्युपरवनामकांश्चतुरो गर्तानभिस्त्रीकार मारभ्य परिलेखन पूर्वकं कुर्यादिति च तदर्थः।

§ ऋ० वे० ९, ७, २४।

२ ३ ३ २र १ २ १ २ १ २
हाहो२३४हा। छ्रोअध्वा२३रायि। इहा३। भ्राजा
४ ५ २ ३ ५ ३ २ ४ ३ १ १
३नाया। हाहो२३४हा। तिगा३व्या५यू६५६:। हे२३
१ १
४५(३) ॥ १२ * ॥ [९]

५ र २ ४र ५ ४र ५ २ १ २ १
॥ साध्रम् ॥ अभीनो३वाजसातमाम्। रयायिमर्षा
३ २ ३ ५ १ र २ १ २ ३ १ १
२। शता३४५। स्पृ२३४हाम्। इन्दोसहस्रभर्णसा२३
१ १ १ २ ३ ५ १ २ ३ ५ ४
४५म्। तुवाओ२३४वा। द्युम्नाओ२३४वा। विभा५
५ २ ४ ५ ४र ५ २ १ २ १
सहाम् ॥(१) वयन्ते३अस्यराधसा:। वसोर्वसा २ उ।
३ २ ३ ५ १ र २ २ ३ २ २
पुरू३४५। स्पृ२३हा:। निनेदिष्ठतमाइषा१:। स्यामा
३ ५ १ २ ३ ५ ४र
ओ२३४वा। सुम्नाओ२३४वा। तेआ५धिगाउ ॥(२)
५ २ ४ ५र ४ ५ २ १ २ १ ३ २
परिस्या३स्वानोअक्षरात्। इन्दूरव्या२यि। मदा३४५।
३ ५ १र २र १ २र १र २ ३ २ २ ३
च्यू२३४ता:। धारायऊर्द्ध्वोअध्वरा१यि। भ्राजाओ२३४

* ऊ० गा० १७प्र० १ख० १२सा०।

५ १ २ ३ ५ ४ ४
वा। नायाश्रोर३४वा। तिगा५व्ययूः। होपूई।

डा(३)॥१३*॥[१०]

४३ ४ २ ४र
॥यज्ञायज्ञीयम्॥ श्रभाऽ५यिनः। वा३जा३साता

५ १ २ १ २ २ १ १
माम्। रायिमर्षा। श्रा३तास्पृहाम्। इन्दो२स।

२ १ २ २ १
हस्रा२३भा। ऊम्मायि। णा३साम्। तुविद्युम्नंविभा

३२ १२ १र र र र
२सद्वाउ॥(१) हावा। यन्तेश्रस्यराधसोवसोर्वसाउ।

२ १ ३ २ १ १ २ १
पूऽहस्पृ३हाः। निनेरदि। ष्ठता२३माः। ऊम्मायि।

२ २ १ र र ३ २ १ २
श्रा३यिषाः। स्यामसुम्नेतेश्रा२ध्रिगाउ॥(२) गोपा।

१ र र २ १ २ २ १र
रिस्यस्वानोश्रन्तरदिन्दुरव्यायि। मा३दाच्यू३ताः। धा

१ र २ १ २ २ १ र
रा२यः। ऊर्द्ध्वी२३श्रा। ऊस्मायि। ध्वा३रायि। भ्राजा

र ३ २ १ १ १
नयातिगा२व्ययाउ। वा३४५(३)॥१४†॥[११]

---

* ऊ० गा० १७प्र० १ख० १३सा०।

† ऊ० गा० १७प्र० १ख० १४सा०।

॥ स्वारकौत्सम् ॥ अभीनोवाजा३सातमाम् । रयि
मर्षंशता१स्पृ२३हाम् । इन्दोसहा३ । स्वा३भार्णा३माम्
आऽ२यि । तुविद्युम्नो२३४हायि । विभा३मा५हाई५६म॥(१)
वयन्ते अस्या३राधसाः । वसोर्वसोपुरु१स्पृ२३हाः । निने
दिष्ठा३ । ता३मा आ३यिपाः । आऽ२यि । स्यामसुम्नो
२३४हायि । तिआ३ध्रा५यिगा६५६उ ॥(१) परिस्यस्वा
नो३अक्षरात् । इन्दुरव्यो मदा१च्यु३ताः । धारायऊ३ ।
र्ध्वो३आध्वा३रायि । आऽ२यि । भ्राजानयो२३४हायि ।
तिगा३व्या५यू६५६ः(३) ॥ १८ * ॥ [१२]

॥ कार्त्तयशमम् ॥ अभीहाहाउ । नो२३४वा । ज
साओ३हो३तामाम् । रयायिमौ३हो३यि । आर्षा६ ।
हाउवा । शतस्पृहा२म् । उपा । इन्दोसहस्रभा१र्णा

* ऋ० गा० १७प्र० १स्व० १६मा० ।

२ १ २ २ ४ ५ ५ २
३साम्। तुवश्रौ३हो३यि। द्यू्म्नाई्म्। हाउवा। वि
र १ ३ १ १ १ १ २ र ३
भासहम्। उपा२३४५॥(१) वय्ँहाहाउ। ते२३४
५ २ १ २ २ ४ ५ २ १ २ २
आ। स्वराश्रौ३हो३। धासाः। वसाश्रौ३हो३यि।
४ ५ ५ २ १ १ २ १ र
वासा६उ। हाउवा। पुरुस्पृहा२ः। उपा। निनेदि
२ २ २ र १ २ २ ४ ५
ष्ठतमा१आ३यिषाः। स्यामाश्रौ३हो३यि। सुम्ना६हायि।
५ २र १ र ३ १ १ १ १ २ र र
हाउवा। तेअधिगो। उपा२३४५॥(२) परीहाहाउ।
३ ५ २र १ २ २ ४ ५ २ १ २ २
स्या२३४स्वा। नोआश्रौ३हो३। चारात्। इन्दूरौ३हो३
२ ५ ५ २ १ १ २
यि। आव्या६यि। हाउवा। मदच्युता२ः। उपा।
१र र र र २ २ २ र १ २ २ ४ ५
धारायऊर्द्ध्वा्आ१ध्वा३रायि। भ्राजाश्रौ३हो३। नाया
५ २ १ ३ १ १ १
६। हाउवा। तिगव्ययूः। उपा२३४५(३)॥ १० *॥[१३]

२ र र २
॥ त्रीतन्त्वाष्ट्रीसाम† ॥ अभीनोवा। जसा३तमाम्।
१ २ २ २ २ ३ २ १ २ २
रयायिमर्षा३श्रता३। ए३। स्पृहमा। इन्दोसहा३स्रभा

* ऊ० गा० १८प्र० १अ० १०सा०। † "त्र्यन्तत्वाष्ट्री साम"—इति ख० पु० पाठः।

२ २ ३ २ १ १ २ १
३। ए३। णसमा। तुवायिद्युम्ना३विभा३। ए३।

२ ३ २
सद्दमा(१)॥ ८ * ॥ [१४] १६

अथ तृतीयसूक्ते —

प्रथमा।

१ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १र २र
पवस्वसोममहांत्समुद्रःपितादेवानांविश्वाभिधाम ॥१†॥

हे "सोम!" "महान्" "देवेभ्यो" दीप्यमानत्वेन महत्व-युक्तः, "समुद्रः" समुन्दनः यस्मात् समुद्द्रवन्ति तादृशः, "पिता" सर्वेषां पालयिता त्वं "देवानां" "विश्वा" विश्वानि सर्वाणि "धाम" धामानि शरीराणि "अभि" लक्ष्य "पवस्व" चर ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ १ १ १र २र ३ १ १
शुक्रःपवस्वदेवेभ्यःसोमदिवेपृथिव्यैशञ्चप्रजाभ्यः ॥ २ ‡ ॥

हे "सोम!" "शुक्रो" दीप्तः त्वं "देवेभ्यः" देवार्थं "पवस्व" चर। किञ्च "दिवे पृथिव्यै" च द्यावापृथिवीभ्याञ्च ततः "प्रजाभ्यः च" "शं" सुखं कुरु॥

"प्रजाभ्यः"-"प्रजायै"—इति पाठो ॥ २ ॥

---

* ऊ० गा० १९प्र० २ ख० ९मा०।

† छ० आ० ५, १, ५, ३ (१भा० ८७३पृ०)=ऋ० वे० ७, ५, १०, ४।

‡ ऋ० वे० ७, ५, १०, ५।

अथ तृतीया।

३ २ ३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ २
दिवोधर्त्तासिशुक्रःपीयूषःसत्येविधर्मन्वाजीपवस्व॥३*॥१७

हे सोम! "शुक्रः" दीप्तः "पीयूषः" पातव्यः त्वं "दिवः" द्युलोकस्य "धर्त्ता" धारकः "असि", "वाजी" बलवान् स त्वं "सत्ये" सत्यभूते "विधर्मन्" विधर्मणि [विविधानि कर्माणि ऋत्विजो कुर्वन्ति यस्मिन्; यद्वा, विविधं सोमादि-हविषां धारकेऽस्मिन्] यज्ञे "पवस्व" चर॥ ३ ॥ १७

२र १ र २ र १ ३
॥धर्मम्॥ औहोऽ३वा। औहोऽ३वा। औहोऽ२वा

५र ५ १ २ र १र १ २ २ १र
२३४औहोऽ६वा। पवस्वसोममहान्समुद्राऽ१ः। पितादेऽ२

१र १ २र १ र १ १ १ १ २ १ १ र १र
वानाऽ२विश्व। उतिवामाऽ२३४५॥(१) शुक्रःपवस्वदेवेभ्य

२र ३ १ १ १ १ २ १र २ १र २ १र १ १ १ १ २ १र
सोमाऽ२३४५। दिवेपृथिव्यैशञ्चप्रजाभ्याऽ२३४५ः। दिवो

२ १र २ १ २र १र १ १ १ १ २ १र २ र १र २ ३
धर्त्तासिशुक्रःपीयूषाऽ२३४५ः। सत्येविधर्म्मन्वाजीपवस्वा

१ १ १ १ १ २ र १ १ १ १ २ १र ३ १ २ १र
२३४५॥(१) पवस्वसोमाऽ२३४५। महान्समुद्राऽ१ः। पिता

१र १ १ १ १ १ १र १ र १ १ १ १ २ १
देऽ२वानाऽ२३४५म्। विश्वाभिधामाऽ२ ३ ४ ५॥(२) शुक्र

* ऋ० वे० ७, ५, १० ६।

२ ३ १ १ १ १ ७२ १२ ७२ ३ १ १ १ १ २ १२ ९ १
पवस्वा२३४४ । देवेभ्यःसोमा२३४५ । दिवेपृथिव्या१यि ।

२ १२ १ १ १ १ २ १२ २ १२ ३ १ १ १ १ २ १ २२ १२
शञ्चप्रचाभ्या२३४५ः । दिवोधर्त्तासी२३४५ । शुक्रःपीयू

१ १ १ १ २ १२ ३ २ २२ १२ २ ३ १ १ १ १
षा२३४५ः । सत्ये विधर्म्मा१न् । वाजीपवस्वा२ ३ ४ ५ ।

२२ २ २ १ ३ ५२ ५ २ १
औहो३वा२ । औहो२वा२३४औहो६वा । ए३ । धर्म्मा

१ १ १
२३४५(३) ॥ ८ * ॥ [१]

२ २ १ २ १
॥ आभीगवम् ॥ पा१वास्वा । सो२३मा । ऊम्मा२

१२ २ १ २ १२ २२ १२ ३ १ १ १ १ १ २
१ऽ२ । महान्त्समुद्रःपितादेवाना२३४५म् । वायिश्वा३

२ १ २ १ २ ४ ५ ४
उवा । भा२३यिधा । मा । औ३होवा । हो५ई ।

डा(३) ॥ ८ † ॥ [२] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

अष्टमः खण्डः‡ ॥ ८ ॥

---

* ऊ० गा० ५प्र० १ख० ९मा० ।

† ऊ० गा० २१प्र० ३ख० ८मा० ।

‡ 'यज्ञायज्ञीयमग्निष्टोमसाम,'—इति वि० ।

अथ नवम-खण्डे*—

प्रेष्ठंवइति तृचात्मकं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ १ २ ३ ५
प्रेष्ठंवो अतिथिᳩं स्तुषेमित्रमिवप्रियम्।

२ ३ १ २ ३ १र २र
अग्नेरथन्नवेद्यम्॥ १ †॥

हे "अग्ने!" "वः" त्वां [ पूजार्थे बहुवचनम् ] "स्तुषे" स्तौमि अहमुगनेति शेषः। कीदृगम्? प्रेष्ठम्" अस्माकं स्तोतॄणां धन-दानेन प्रियतमम्। "अतिथिं" सर्वैरतिथिवत् पूज्यं [यद्वा, अत सातत्यगमने ( भ्वा० प० ) ऋतन्यञ्जि ( उ० ४,२ )"—इत्यादिना अतेरिथिन्। सततं देवानां हविः प्रदातुं गच्छन्तम् ] "मित्रमिव" सखायमिव "प्रियं" स्तोतुः प्रीणनकरं "रथं न" रथमिव "वेद्यं" वेद्यो धनं धन-हितं लाभ-हेतुं [ यथा स्वाभिमत-लाभाय आश्रयन्ते धन-लाभ-हेतुं रथम्; यद्वा, यथा रथेन धनं लभते तद्वत् स्तोतारोऽनेन धनं लभन्ते, तादृश-धन-लाभ-कारणम् ]। हे अग्ने! तस्मै हितं वेद्यं त्वां कर्म-सिध्यर्थम् अहं स्तोता स्तौमीति सम्बन्धः॥

"अग्ने"–"अग्निम्"—इति पाठौ॥ १ ॥

---

* इदानीमुक्थसामानि भवन्ति आग्नेयं प्रथममुक्थम्—इति वि०।

† छ० आ० १, १, १, ५ ( १भा० १००पृ० ) = ऋ० वे० ६, ६, ५, १ = य० वे० १३, ५१।

अथ द्वितीया ।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
कविमिवप्रश ᳪ स्यंयन्देवासइतिद्विता ।

१२ ३२ ३ १
निमर्त्त्येष्वादधुः ॥ २ * ॥

हे "देवासः" देवाः इन्द्रादयः ! "यम्" अग्निं "मर्त्त्येषु" मनुष्येषु "इति" वक्ष्यमाण-प्रकारेण "द्विता" द्विधा† "न्यादधुः" गार्हपत्याहवनीयात्मकत्वेन द्विधा निहितवन्तः। तत्र दृष्टान्तः—"कविमिव" "प्रशंस्यं" प्रशंसनार्हं क्रान्त-कर्माणं पुरुषं यथा द्विधा कार्यद्वये अन्यो नियोजयति तद्वत् [ यद्वा दिवि पृथिव्यां च निहितवन्तः, भूमौ तु हविराहरणार्थं दिवि तु हविः प्रदानार्थमिति द्वैधं निधानं कृतवन्तइत्यर्थः ]। तमग्निं स्तुषे इति पूर्वेण सम्बन्धः ॥

"प्रशंस्यं"-"प्रचेतसं"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ १ १ ३ १२ ३२
त्वंयविष्ठदाशुषोनॄ ᳪः पाहिशृणुधीगिरः ।

१ २ ३ २ ३ १२ ३२
रक्षातोकमुतत्मना ॥ ३ ‡ ॥ १८

* ऋ० वे० ६, ६, ५, २ ।

† 'द्विता नाम ऋषिः'—इति वि० ।

‡ ऋ० वे० ६, २, ५, ३ ।

हे "यविष्ठ" युवतम! [यद्वा, यौतेस्तृजन्तस्य इष्ठनि* रूपं देवानां हविषां मिश्रयितृतम!] इन्द्र! त्वं "दाशुषः" हविर्दत्तवतः "नॄन्" कर्मणां नेतॄन् यजमानान् "पाहि" धनानां दानेन रक्ष [नॄःपाहीत्यत्र संहितायां "नॄन्पे (८, ३, १०)"— इति नकारस्य रुत्वम्, "अत्रानुनासिक (८, ३, २)"—इति पूर्वस्यानुनासिकः। किञ्च, "गिरः" त्वद्विषयाः स्तुतीः "शृणुहि"† अवहितः सन् शृणु। "उत" अपिच "त्मना"‡ आत्मनैव "तोकम्" अस्मदीयं "तनयं" पुत्रं "रक्ष"¶ पालय [त्मनेति सर्वत्र सम्बध्यते—आत्मना स्वयमेव रक्ष, त्वदन्यं पालयितारं न विन्दामः त्वमेवास्मदीयम्॥

"शृणुही"-"शृणुधि"—इति पाठौ॥ ३॥ १८

॥ गायत्रौशनम्॥ प्रेष्ठंवाः। अता २ ३ यिथीम्। स्तोषेमित्रम्। इवप्रा२३याम्। अग्नेंविरा३था३म्। नावा२३हा३४३यिदा२३४यो६हायि॥(१) कविमिवा। प्र शꣳसा२३याम्। यान्देवासः। इतिद्वा२३यिता। नि

* "तुरुश्छन्दसि"—इति पा० ५, ३, ५९।

† "शृणुही"—इति दीर्घः संहितायाम्।

‡ "मन्त्रेष्वाङ्यादेरात्मनः"—इति पा० ६, ४, १४१।

¶ संहितायान्तु "रक्षा"—दीर्घान्तः, मच हाव इति दीर्घः।

२ २ १ २ १ ५ ५
मात्तौ३ये३। षूवा२३हा३४३यि। दा२३४धो६हा ॥(२)

१ र १ २ १र २ १ र २ १र
तुवंयवायि। छदा५ुर२३षाः। नृडपाहिभ्रद्। एाुहोगा

२ १ २ २ १ २
२३यिराः। रक्षातो३का३म्। ऊता२३हा ३ ४ ३यि।

१ ५ ५
त्मा२३४नो६हायि(३) ॥ ११ * ॥ [१] १८

अथ तृचात्मके द्वितीय-सूक्ते—

प्रथमा ।

१ २ ३ १ २
एन्द्रनोगधिप्रियसत्राजिदगोह्य।

३ २उ २ १ २ ३ १र २र ३ २
गिरिर्नविश्वतःपृथुःपतिर्दिवः ॥ १ † ॥

हे "प्रिय" स्तोतृणां प्रीणनकर! "सत्राजित्"‡ महतां शत्रूणां जेतः! हे "अगोह्य" केनापि गुहितुमशक्य! "इन्द्र!" "गिरिर्न" पर्वत इव¶ "विश्वतः" सर्वतः "पृथुः" पृथुतमः "दिवः" स्वर्गस्य "पतिः" ईश्वरस्त्वं "नः" अस्मान् "आगधि" आगच्छ ॥

* ऊ० गा० ५प्र० १अ० ११सा०।

† छ० आ० ५, १, १, ३ (१भा० ८०७पृ०)=ऋ० वे० ६, ७, १, ४।

‡ 'सत्राजित्—सदाजेता'—इति वि०।

¶ 'गिरिर्मेघः गर्भारसव्यापी अथवा गिरयः पर्वताः—इति वि०।

“प्रियसखाजिदगोह्य”-“प्रियःसखाजिदगोह्यः”—इति पाठौ, “विश्वतःस्पृणु”*-“विश्वतस्पृथुः”—इति च ॥ १ ॥

अथ द्वितीया।

३ १र  २र        ३ २ ३ १ ३ १ २
अभिहिसत्यसोमपाउभेबभूथरोदसी।
१र   २र  ३ २ ३ १र  २र ३ २
इन्द्रासिसुन्वतोवृधोपतिर्द्दिवः ॥ २ † ॥

हे सत्य! “सोमपाः” सोमस्य पातः! “इन्द्र!” यस्त्वम् “उभे” “रोदसी” द्यावापृथिव्यौ “अभि बभूथ” सामर्थ्येनाभिभवसि स त्वं “सुन्वतः” सोमाभिषवं कुर्वतः यजमानस्य “वृधः” वर्धकः “असि”। “दिवः” स्वर्गस्यापि “पतिः” ईश्वरोऽसि ॥२॥

अथ तृतीया।

१र      २र  ३ १ २ ३ २  ३ १र  २र
त्वꣳहिशश्वतीनामिन्द्रदर्त्ता‡पुरामसि।
३ २उ  ३ १ २ ३ १र  २र ३ २
हन्तादस्योर्मनोर्वृधःपतिर्द्दिवः ॥ ३ ¶ ॥ १९

* नैषपाठः क्वचिदप्युपलभ्यते।

† ऋ० वे० ६, ७, १, ५।

‡ “धर्त्ता”—इति मु०-पाठः सायणसम्मतस्य परं बङ्गपुस्तकविरोधात् पदादि-पर्य्योऽपि एवमदर्शनाच्चोपेक्षणीयएव।

¶ ऋ० वे० ६, ७, १, ६।

हे इन्द्र! "रेवतं" केवल-धनवन्तं यागादि-रहित मयष्टार माढा मन्यं मानवं "सख्याय" सखिभावाय "न किः विन्दसे" न लभसे नाश्रयसीत्यर्थः। अयष्टारो जनाः किं सन्ती त्यतआह—"सुराश्वः" [ टु ओ श्वि गति-वृद्धोः; सुरया वृद्धाः तद्वत् ] प्रमत्त-नास्तिकाः। "ते" त्वां "पीयन्ति" [ पीयति हिंसा-कर्मा ] हिंसन्ति तवाश्रयतीत्यर्थः। "यदा" त्वं "नदनु" [ नद अव्यक्ते शब्दे ( भ्वा० प० )] यं स्तोतारं "कृणोषि" मदीयोऽयमिति यदा भावयसि, तदानीं संवहसि धनादिकं तस्मै वहसि। "आदित्" अनन्तरमेव तेन लब्धधनेन स्तोत्रा "पिता इव" पालयिता जनक इव "हूयसे" स्तुतिभिराहूयसे स्तूयस इत्यर्थः॥ २॥ ४

५ र ९ ४र २
॥ उक्ष्यामहीयवम्॥ अभ्रातृ३व्योअनातुवाम्। अ

१ २ १ र २ १ २र र १
नापा१यिरा२यि। द्रजनुषासना२३दसायि। यूधेदापा

२ ५ र २ ४ ५
यि। त्वमा२३यिच्छसाउ। वा३॥(१) युधेदा३पित्वमि

२ १ २ १ र
च्छसायि। नकायिरा१यिवा२। न०सखियायवा२३यि

२ १ २ १ २
न्दसायि। पायियन्तितायि। सुरा २ ३ श्वाउ। वा

५र २ ४र ५र २ १ २ १
३॥(२) पीयन्ता३यितेसुराश्वाः। यदाका१र्णो२। षि

२ १ २ १ २
तदनु ए ममू२३हसायि। आदित्यितायि। वहू२३यमा

२र १११
उ। वा३। स्तौषे३४५(३) ॥ १०* ॥ ४

आत्वासहस्रमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

आत्वासहस्रमाशतंयुक्तारथेहिरण्यये।

ब्रह्मयुजोहरयइन्द्रकेशिनोवहन्तुसोमपीतये ॥ १‡ ॥

हे "इन्द्र!" "त्वा" त्वां "सहस्र" सहस्र-सङ्ख्याका "हरयः" त्वदीया अश्वाः "आ वहन्तु" आनयन्त्वस्मद्यज्ञं, तथा "शतं" शत-सङ्ख्याकाश्च भवदीयाश्वाः त्वामावहन्तु [ यद्यपि द्वावेवास्य हरी तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः सन्ति। ननु युगपदेनेकैरश्वैः कथं वाहयितुं शक्यत इत्यत आह— युक्ता इति ] "हिरण्यये" स्वर्ण-विकारे [ हिरण्य-शब्दाद् विकारार्थे विहितस्य मयटः "ऋत्व्यवास्त्व्य (६, ४, १७५)"— इत्यादौ म-लोपो निपात्यते ] तादृशे "रथे" "युक्ताः" सम्बद्धाः [ बहूनां मश्वानां शीघ्र-गमनाय रथे नियुक्तत्वाद् युगपदेव सर्वैरश्वैर्गन्तुं शक्यत इति भावः ]। कीदृशा हरयः ? "ब्रह्म-

---

* ऊ० गा० ७प्र० १ख० १०मा०

† 'अभीवर्त' स्तोत्रीयम्'—इति वि०।

‡ छ० आ० ३, २, १, ३ ( २अ० ५०५उ० ) = ऋ० वे० ५, ७, १४, ४।

युजः" ब्रह्मणा परिवृढेनेन्द्रेण युक्ताः [ यद्वा, ब्रह्मणास्मदीयेन स्तोत्रेण अस्माभिर्दत्तेन हविषा वा युक्ताः ] "केशिनः" केशाः सटाः तैर्युक्ताः। किमर्थम् इन्द्रस्य वहनम्? तत्राह—"सोमपीतये" सोमस्य पानाय यथास्मदीयं सोमं पिबेत्, तथा वहन्त्वित्यर्थः ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ २ २ १ २ ३ १ २
आत्वारथेहिरण्ययेहरीमयूरशेप्या।
२ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
शितिपृष्ठावहतांमध्वोअन्धसोविवक्षणस्यपीतये ॥ २* ॥

[ पूर्वं हर्यौ विभूतिरूपा अश्वाः इन्द्र मावहन्त्विति प्रार्थितम्, अधुना ताविवेन्द्र मावहतामिति प्रार्थ्यते—]"हिरण्यये" हिरण्मये "रथे" युक्तौ "मयूरशेप्या" मयूरवर्णः शेपो ययोस्तौ [ सुपां सुलुगिति (७,१,३९) विभक्तेर्डादेशः ] "शितिपृष्ठा" श्वेतपृष्ठौ† एवम्भूतौ "हरी" अश्वौ हे इन्द्र! "त्वा" त्वाम् "आ वहताम्"। किमर्थम्? "मध्वः" मधुर-रसस्य "विवक्षणस्य" वक्तुमिष्टस्य स्तुत्यस्य‡ यद्वा वोढव्यस्य प्रापव्यस्य "अन्धसः" अन्नस्य सोमरूपस्य "पीतये" पानार्थम् ॥ २ ॥

* ऋ० वे० ५, ७, १४, ५।

† 'शितिपृष्ठा—नीलपृष्ठौ'—इति वि०।

‡ 'अतिशयेन विवर्चितभूतस्य'—इति वि०।

अथ तृतीया।

२ ३ १ १ २ ३ १ १ १ १ २
पिबात्वा ऽ३ऽस्यगिर्वणःसुतस्यपूर्वपाइव।

१ २ ३ १ १ ३ १ २ ३ २ १ १ २
परिष्कृतस्यरसिनइयमासुतिश्चारुर्मदायपत्यते॥ ३* ॥ ५

हे "गिर्वणः" गीर्भिर्वननीयः स्तुतिभिः सम्भजनीयेन्द्र! "सुतस्य" अभिषुतस्यास्य सोमस्य [क्रियाग्रहणं कर्त्तव्य मिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी (२,३,६२)] इम मभिषुतं सोमं "नु" क्षिप्रं "पिब"। तत्र दृष्टान्तः—"पूर्वपाइव"† [पूर्वः पूर्वेभ्यो देवेभ्यः प्रथमभावी सन् पिबतीति पूर्वपा वायुः, सह्यै-न्द्रवायवे मुख्ये ग्रहे सर्वेभ्यो देवेभ्यः पूर्वं पिबति "यस्य देव दधिषे पूर्वपेयम्"—इति निगमान्तरम्; तादृशः] वायुरिव त्वमपि सर्वेभ्यो देवेभ्यः पूर्वं पिबेत्यर्थः। कीदृशस्य सोमस्य? "परिष्कृतस्य" अभिषवादिभिः संस्कृतस्य ["सम्पर्युपेभ्यः (६,१, १३८)"—इति करोतेर्भूषणे सुट्, "परिनिविभ्यः (८,३,७०)" —इति सुटः षत्वम्], "रसिनः" रसवतः। अपिच "इयमा-सुतिः"‡ अयमासवो मदकरः "चारुः" शोभनः सोमरसः "मदाय" हर्षाय हर्ष-जननाय "पत्यते" सम्पद्यते [पत्लृ गतौ (भ्वा० प०), यद्वा पत्यतिरैश्वर्य्य-कर्मा। मदाय—मदस्य पत्यते ईष्टे मदोत्पादने शक्त इत्यर्थः]॥ ३॥ ५

---

* ऋ० वे० ५, ७, १४, १।

† 'पूर्वपातारो ये ते यथा पिबन्ति तद्वत् पिबन्त'—इति वि०।

‡ 'आसुमितापत्तिरित्यर्थः'—इति वि०।

५र४ १ ४ ५र ४ ५ १ र
॥ अभीवर्त्तम् ॥ आत्वा३सा२ढस्त्रमाशतोवा । यूक्ता
२र १ २ १ २ ३ ४
रथे । हिराण्या१या२यि । ब्राह्मयुजौ३१२३४ । हरय
५ २ १ २ १ २ ३ २
इ । न्द्रकायिशा१यिना२ः । वहान्तु१सोर । मपा३यि ।
११११ ५र४ २ ४ ५ ४ ५ १ र
ता२३४५यि ॥(१) आत्वा३रा३थायिहिरण्ययोवा । हारी
२ र १ २ २ ३ ४र
मयू । रशायिपा१या२ । यितिपृष्ठा३१२३४ । वहता
५ २र १ १ १ १ ३ १ १
मशध्वोआन्धा१सा२ः । विवाक्षा१णा२ । स्यपा३यि । ता
३ १ १ १ १ ५ ४ ३ ४ ५ ४ ५
२३४५ । या२३४५यि ॥(२) पिबा३तू३वस्यगिर्वणोवा ।
१ २र १ १ २ २
स्तुतस्यपू । र्वपाआ१यिवा२ । पारिष्कृता३१२३४ । स्य
४ ५ २ १ १ र १ २ ३ २
रसिनइ । यमास्त१ता२यिः । चारुम्मा१दा२ । यपा३ ।
१ ३ १ १ १ १
त्या२३४५ । ता२३४५यि(३) ॥ १५* ॥ १

२र र १ २
॥ भारद्वाजम् ॥ आत्वासहा । स्त्रमाशा १ ता२म् ।
१ र २ र र १ २ १ १ १
यूक्तारथेहिरण्यये । ब्रह्मायू१जा२ः । हारयइ । द्रका

* ज० गा० ७प्र० १ख० १५मा० ।

२ १ १ १ ३ ५र र
यिश्राश्यिना२ः । वद्दान्त्१मो२३ । मा२पा२३४औहो

३ ५ २र र १ २
वा । ता२३४य ॥(१) आत्वारथायि । हिराण्या१या२

१ र२र र र १ १ १ २र
यि । हारीमयूरशेप्या । शितायिपा१ष्ठा२ । वाहता

र१ १ १ २ १ ३
म्म । ध्वोश्रान्धा१सा२ः । विवाह्वा१णा२३ । स्था२पा२

५र र ३ ५ २र १ १
३४औहोवा । ता२३४ये ॥(२) पिबातुवा । स्यगायिर्वा

१ १ र र १ २ १
१णा२ः । ह्तस्यपूर्वपाइव । परायिष्का१त्ता२ । स्था२

२ १ २ १र २ १ १
सिनइ । यमाद्व१ता२यिः । चाह्यर्म्मा१दा२३ । या२पा

५र र ३ ५
२३४औहोवा । त्यो२३४ते(३) ॥ १२* ॥ २

२र १ २ १ २
॥ अभिनिधनं काण्वम् ॥ औहोहोहायि । आयाही ।

१ २ ३ ५ २ ३ ५ २ १ ५
आत्वा। सा२३४हा॥ स्रामाश्रा२३४ताम्। यूक्ता२रा२३४थायि।

२र १ २र १ ३ ५ २ ३
होरण्ययायि । ऐहोयि । आ२३४यिही । ब्रा ऽह्मायू२३

५ २ ३ ५ १र१र १र१ ३
४जो । हा२रायार३४ई । द्राकेशिनाः । ऐहोयि । आ

* कौ० गा० १८प्र० २ख० १२गा० ।

५ २ ३ ५ ३ २ ४
२३४यिहो। वा इन्द्व२३४सो। मपा३यिता५या६५६यि ॥(१)

२र १ २ १ २ १ २ ३ ५
औहोहोहायि। आयिहो। आत्वा। रा२३४यायि।

२ ३ ५ २ ३ ५ २र १र
हायिरण्या२३४यायि। हारीमा२३४यू। राशेपिया।

२र १ ३ ५ २ ५ ५ २
ऐहोयि। आ२३४यिहो। मायितायिपा२३४र्ड्डी। वा

३ ५ २र १ २र १ ३
हाता२३४म्मा। ध्वोअन्धसाः। ऐहोयि। आ२३४यि

५ २ ३ ५ ३ २ ४
हो। वायिवत्ता२३४णा। स्यपा३यिता५या६५६यि ॥(२)

२र १ २ १ २ १ २ ३ ५
औहोहोहायि। आयिहो। पायिबा। तू२ ३ ४वा।

२ ३ ५ २ ३ ५ २र १र २र १
स्यागिर्वा२३४णाः। सूतस्या२३४पू। र्वापाइवा। ऐहो

३ ५ २ ३ ५ २ ३
यि। आ२३४यिहो। परिष्का२३४र्त्ता। स्यारासी२३

५ २ १र २र १ ३ ५ २
४नाः। इयमासुतायि। ऐहोयि। आ२३४यिहो। चा

३ ५ ३ २ ४ ३
रुर्म्मा२ ३ ४दा। यपा३त्या५ता ६ ५ ६ यि। आ २ ३ ४

५
भो(३) ॥ ३ * ॥ [३] ५

---

* ऊ० गा० २३प्र० ३ख० ३सा०।

अथ आसोतेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ १र २र ३ १ २ ३ १ २
आसोतापरिषिञ्चताश्वन्नस्तोममप्तुरꣳरजस्तुरम् ।
३ १ २ ३ १ २
वनप्रक्षमुदप्रुतम् ॥ १ * ॥

हे ऋत्विज ! "आसोत" सोमम् अभिषुणुत [ षुञ् अभिषवे (स्वा० उ० ), लोटि छान्दसो ( २, ४, ७२ ) विकरणस्य लुक्, "तप्तनप्तनथनाश्च ( ७,१,४५ )"—इति तस्य तबादेशः] । किञ्च, "परिषिञ्चत" परितस्तं वसतीवर्यादिभिः सिञ्चत । कीदृशम् ? "अश्वं न" अश्वमिव वेगिनं "स्तोमं" स्तोतव्यम्, "अप्तुरम्" अन्तरिक्षस्थितानामुदकानां प्रेरकम् "रजस्तुरं" तेजसां प्रेरकम्, "वनप्रक्षम्" उदकवत् क्षरणशीलम्, "उदप्रुतम्" उदके गच्छन्तं प्लवमानं सोममभिषुणुत अभिषिञ्चत च ॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ १ १ ३ १२ ३ २ ३ २ ३ १ २
सहस्रधारंवृषभम्पयोदुहम्प्रियन्देवायजन्मने ।
१ २ ३ २ ३ १ २ ३ १र १र ३ २ ३ २ ३ २
ऋतेनयऋतजातोविवावृधेराजादेवऋतम्बृहत् ॥२†॥ ६

* छ० आ० ६, २, ४, ३ ( २भा० २२८४० ) = ऋ० वे० ७, ५, १८, २ ।

† ऋ० वे० ७, ५, १८, ३ ।

"सहस्रधारं" बहुधारोपेतं, "वृषभं" कामानां वर्षकं, "पयोदुहं" चीरवत् सारभूतं रसं सिञ्चन्तं "प्रियं" प्रीणयितारं सोमं "देवाय" देव-सम्बन्धिने "जन्मने"* देवेभ्यस्तदर्थम् अभिषुणुत । "ऋतजातः" उदकाज्जातः "यः" "राजा" सोमः "ऋतेन" यमतीवर्याख्येनोदकेन "वि वावृधे" विशेषेण वर्द्धते । कीदृशः ? "देवः" द्योतमानः स्तोतव्यो वा, "ऋतं" सत्यभूतः, "बृहत्" महान् । तमासुनुतेति पूर्वेण समन्वयः ॥

"पयोदुहम्"-"पयोवृधम्"—इति पाठौ ॥ २ ॥ ६

३र ४र ५र २र ३ ४ ५ ५
॥ वाचःसाम ॥ आसोतापा । द्योरिषिञ्चता ६ ए ।

१ २ र १ ० १ २ ०
आश्वन्नस्तो । मामप्रा २म् । राजस्तुरम् । वानप्रा

१ ४ २ ५
चा२३म् । ऊ२३दा३ । प्र२३४५तो६५चाइ(१) ॥१†॥ [१]

३र ४र ५र २र ३ ३ ५ ५
॥ वाचःसाम ॥ आसोतापा । द्यो । रिषिञ्चता६ए ।

१ १ र १ ० १ २ १ ०
आश्वान्नस्तो । मामप्रा २म् । राजस्तुरम् । वानप्रा

१ ४ २ ५ ३ ४ ५
चा२३म् । ऊ२३दा३ । प्र३४५तो६चायि ॥(१) वनप्र

० २ ३ ४ ५ ५ १ २ १ ०
क्षाम् । द्यौयि । उदप्रताइमे । साहस्रधा । राम्वृ

* 'जन्मवतां मूलभूताय' इति वि० ।

† ऊ० गा० १प्र० २ख० १सा० ।

१र र १ ७ १ ४
षभा२। पायोदुह्वम्। प्रायन्दायिवा२३। या२३जा३।

२ ५ ३ ४ ५र २ ७ ४ ५ ५
न्मा३४५नोऽ६हायि॥(२) प्रियन्देवा। हो। यजन्मना६ए।

१र २ १ ७ १ र २ र १र २
आर्त्तेनयः। आर्त्तजाता२। वायिवावृधे। राजादा

१ ४ २
१ यिवा २ ३ः। आ २ ३ र्त्ता ३ म्। बृ३ ४ ५ हो ६

५
हायि(३) ॥ १७ * ॥ [२]

२र १र २ ४ ५ १ ३ ५ २
॥ सफम्॥ आसोता३परि। षिञ्चा२३४ता। अ

१ २ १ १ २ ४ २ ५
श्वन्नस्तोमा२म्। अप्तु रा२रा३जा३। स्तु३२ ३ ४राम्।

१ २ ४ २ ५ २ १ १
वना। प्रच्चामू३दा३। प्र ३४५नोऽ६हायि॥(१) वनप्रा३

४ ५ २ ३ ५ २ १ १ १ १ २
च्चमु। दप्र२३ताम्। सहस्रधारा२म्। वृषभाया३

४ २ ५ २ १ र २ ४ २
यो३। दू३२३४हाम्। प्रियाम्। देवाया३जा३। न्मा

५ २ १ २ ४र ५ २ ३ ५
३४५नोऽ६हायि॥(२) प्रियन्दे३वाय। जन्मा२३४नायि।

२ १र २ १ १ २ ४ २ ५
ऋतेनयाआ२। तजातो३वा३यि। वा३ २ ३ ४र्द्धायि।

* ऊ० गा० ७प्र० १ख० १७गा०।

२ १ १ २ १ १र २ ४ २ ५
ऋतेनयाआ२। तजातोवा३यिवा३। वा३२३४ड्वायि।

२ १र २ १ १ १ ४ २ ५
ऋतेनयाआ२। तजातो३वा३। यि। वा३२३४ड्वायि।

२ र १ र २ ४ २ ५
राजा। देवाआ३ त्तां३म्। बृ३ ४ ५ हो ६हायि(३)

॥ १३* ॥ [३] ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे—

अग्निर्वृत्राणीति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ २ ३ १ २ ३ १ २ ३ १ २
अग्निर्वृत्राणिजङ्घनद्द्रविणस्युर्विपन्यया।

१ २ ३ १र २र
समिद्धःशुक्र आहुतः ॥ १† ॥

"विपन्यया" सुस्तूयमानः "द्रविणस्युः" द्रविणं धनं स्तोतॄणामिच्छन् [ यद्वा, हविर्लक्षणं धनमात्मन इच्छन् "अग्निः"

* ऊ० गा० १२प्र० १ख० १३सा०।

† छ० आ० २, १, १, ४ ( १भा० ८८४० ) = ऋ० वे० ४, ५, २७, २।

"वृत्राणि" आवरकाणि रक्षः-प्रभृतीनि तमांसि वा "जङ्घनत्" हिंसन्तु। कीदृशोऽग्निः? "समिद्धः" सम्यक् दीप्तः अतएव "शुक्रः" शुक्लवर्णः "आहुतः" हविर्भिरभिहुतः ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ ३ १ २ ३ १ ३ १ २

गर्भंमातुःपितुष्पिताविदिद्युतानोअक्षरे*।

१ २ ३ २ १ २ ३ २

सीदन्नृतस्ययोनिमा ॥ २† ॥

[ अत्र मातृ-पितृ-शब्दाभ्यां भूद्यौश्चाभिधीयेते "द्यौः पिता, पृथिवी मातेति श्रुतेः ] "मातुः" भूम्याः गर्भे" गर्भस्थाने मध्ये "अक्षरे" क्षरण-रहिते वेद्याख्ये स्थाने‡ "वि दिद्युतानः" विशेषेण दीप्यमानः "पितुः पिता" द्युलोकस्य पालयिता हविषां प्रदानेन, एवम्भूतोऽग्निः "ऋतस्य" यज्ञस्य "योनिम्" उत्तरवेद्याख्यं "धिष्ण्यं" [सप्तम्यर्थे द्वितीया (३, १, ८५)] "आसीदन्" उत्तरवेद्यामुपविशन् अग्निर्वृत्राणि जङ्घनदित्यन्वयः ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २

ब्रह्मप्रजावदाभरजातवेदोविचर्षणे।

१ २ १ ३ १ २ २ २

अग्नेयद्दीदयद्दिवि ॥ ३¶ ॥ ७

* "अक्षरम्"—इति क० पु० पाठः।

† ऋ० वे० ४, ५, २७, ४।

‡ 'अक्षरे—अधीयमाणे स्थाने'—इति वि०।

¶ ऋ० वे० ४, ५, २७, ५।

हे "जातवेदः" जातानां वेदितः ! "विचर्षणे" विशेषेण द्रष्टः अग्ने ! "प्रजावत्" पुत्र-पौत्र-सहितं "ब्रह्म" अन्नम् "आ भर" आहर "यद्" ब्रह्म "दिवि" द्युलोके "दीदयत्" दीप्यते। देवेषु यत् प्रशस्तमन्नं राजते तदाहरेत्यर्थः ॥ ३ ॥ ७

अस्यप्रेषेति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

३ २ ३ २ ३ १ २ ३ १ २
अस्यप्रेषाहेमनापूयमानो
३ २ ३ २ ३ १ २ ३ १ २
देवोदेवेभिःसमपृक्तरसम्।
३ २ ३ २ ३ १ २ ३ १ २
सुतःपवित्रम्पर्येतिरेभन्
३ २ ३ १ २ ३ २ ३ १ २
मितेवसद्मपशुमन्तिहोता ॥ १* ॥

"अस्य" सोमस्य "प्रेषा" [ प्रेषतिर्गत्यर्थः क्विपि रूपं, "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम् ; ] प्रेरणेन, "हेमना" हिरण्येन "पूयमानः"[ "हिरण्यपाणिरभिषुणोति"—इति हिरण्य-सम्बन्धः, तादृशः] "देवः" दीप्यमानः सोमः "रसम्" आत्मीयं "देवेभिः" देवैः सह "समपृक्त" सम्पर्चयति संयोजयति [पृची सम्पर्के (अदा०आ०)] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं "पर्येति"

* ऋ० चा० ६, १, ४, ४ (२भा० ११५९०) = ऋ० वे० ७, ४, ११, १।

परिगच्छति। कमिव? "होता" देवानामाह्वाता ऋत्विक् "मिता इव" निर्मितान् "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञगृहान् यथा पर्य्येति तद्वत्॥ १॥

अथ द्वितीया।

३ १ २र ३ २ १ २
भद्रावस्त्रासमन्याऽ३ऽवसानो

२ २ २ ३ १ २ ३ १ २
महान्कविर्न्निवचनानिशꣳसन्।

१ २ ३क २र ३ १ २
आवच्यस्वचम्वोःपूयमानो

३ १ २र ३ १ २
विचक्षणोजागृविर्द्देववीतौ॥ २*॥

"भद्रा" भद्राणि कल्याणानि "समन्या" [समनमिति सङ्ग्राम-नाम (२, १७, १६), तत्र साधुरिति यत्] सङ्ग्रामयोग्यानि "वस्त्रा" वस्त्राणि आच्छादकानि तेजांसि "वसानः" आच्छादयन् "महान्" "कविः" क्रान्तदर्शी अतएव "निवचनानि" नितरां वक्तव्यानि स्तोत्राणि† "शंसन्" "विचक्षणः" विशेषेण सर्वस्य द्रष्टा "जागृविः" जागरणशीलः। हे सोम! एवम्भूतस्त्वं "देववीतौ" देवानां वीतिर्भक्षणं यस्मिन् तद्देववीतियज्ञः तस्मिन् "चम्वोः" अधिषवण-फलकयोः‡ "आ वच्यस्व" पात्राण्याविश [वंचिर्गत्यर्थः (भ्वा० प०) व्यत्ययेन श्यन्॥ २॥

* ऋ० वे० ७, ४, ११, २।

† 'वचनानि—ऋग्यजुः-साम-लक्षणानि'—इति वि०।

‡ 'चम्वोः—अधिषवण-चर्मणोरुपरि'—इति वि०।

अथ तृतीया।

१ २ ३ १ २ ३ २ ३ १ २
समुप्रियोमृज्यतेसानोअव्ये

३ १ २ १ २ ३ १ २ ३ २
यशस्तरोयशसाङ्क्षैतोअस्मे।

२ १ २ ३ १ २ ३ १ २ ३
अभिस्वरधन्वापूयमानो

३ १ २ ३ २ ३ १ २
यूयम्पातस्वस्तिभिःसदानः ॥ ३ * ॥ ८

"यशसां" यशस्विनां मध्ये "यशस्तरः" अतिशयेन यशस्वी "क्षैतः" क्षितो भावः "प्रियः" प्रीणयिता सोमः "सानौ" समुच्छ्रिते "अव्ये" अवि-भवे पवित्रे "अस्मे" अस्मदर्थं "समृज्यते" ऋत्विग्भिः परिपूयते "उ" [—अवधारणे] "पूयमानः" त्वं "धन्वा" अन्तरिक्षे "अभि स्वर" अभितः शब्दय "यूयम्" [प्रजायां बहुवचनम् †] हे सोम! त्वं "नः" अस्मान् "स्वस्तिभिः" कल्याणतमैः पालनैः "सदा" सर्वदा "पात" रक्षत पालयेत्यर्थः ॥ ३ ॥ ८

२ १ २ १ ३र
॥ उद्ववायिवासिष्ठम् ॥ उद्ववायि। अस्या३ ४औ

४र ५ १र १ १ र २ ३ ४ ५ ३र २ ३र
होवा। प्रेषा। हे३मना। पूयमानाः। देवा३४औ

४र ५ १र २ १ २ २ ४ ५ ३ २
होवा। देवायि। भो३ःसम। पुक्षरसाम्। सुता३

---

* ऋ० वे० ७, ४, ११, ३।

† 'यूयं पात—बहुवचनमिदं सह देवैरित्यर्थः'—इति वि०।

२र र १ १ - १ २ ३ ४ ५ ३ १
४औहोवा। पवायि। चा३परि। एतिरेभान्। मिता

३र र ५ १ २ १ २ २ ४
३४औहोवा। वसा। द्या३पशु। मा३४३। तौ३हो

३ १ ३र र४ ५ १ १ १
५ता६५६ ॥(१) भद्रा३४औहोवा। वस्त्रा। समनि।

२ ३ ४ ५ ३ १ ३र ४र ५ १ २ १
यावसानाः। महा३४औहोवा। कवायिः। निवच।

२ ३ ४ ५ ३र २ ३र ४र १ २ १ र
नानिम्रं९सान्। आवा३४औहोवा। व्यस्वा। चमुवोः।

२ ३ ४ ५ ३ २ ३र ४र ५ १ ३र १
पूयमानाः। विचा३४औहोवा। त्वणो। जागृविः।

१ २ ४ ३ १ ३र ४र ५
दा३४३यि। वा३चा५यिता६५६उ ॥(२) समू३४औहोवा।

१ २ १ र २ ३र ४ ५ ३ १ ३र ४र ५
प्रियो। मृज्यते। सानोअव्यायि। यशा३४औहोवा।

१ १ १ र २ ३र ४ ५ ३ २ ३र ४र ५
स्तरो। यशसाम्। चैतोअस्मायि। अभा३४औहोवा।

१ २ १ र २ ३ ४ ५ ३ २ ३र २ ४ ३र
स्वरा। धनुवा। पूयमानाः। उरुवायि। यूया३औ

४र ५ १र २ १ १ २ ४
होवा। पाता। स्वस्ति। भा३४३यिः। सा३दा५

ना६५६(३) ॥ ६ * ॥ [१] ८

* ऊ० गा० ७प्र० २अ० ६सा०

अथैतोन्विन्द्रमिति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१२ २२ ११ २१ ३२३१ १
एतोन्विन्द्रᳬस्तवामशुद्धᳬशुद्धेनसाम्ना ।
२ ३२३१ २ ३१ २ ३१३ १ २
शुद्धैरुक्थैर्वावृध्वाᳬसᳬशुद्धैराशीर्वान्ममत्तु ॥ १ * ॥

[ अत्रेतिहासमाचक्षते—पुरा किलेन्द्रो वृत्रादिकान् असुरान् हित्वा ब्रह्महत्यादि-दोषेणात्मान मपरिशुद्ध मित्यमन्यत अथ तद्दोष-परिहारार्थं यदेन्द्र ऋषीनवोचत्—यूय मपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति । ततस्ते च शुद्धत्वात्मकेन साम्ना शस्त्रैश्च परिशुद्ध मकार्षुः । पश्चात् पूतायेन्द्राय यागादि-कर्मणि सोमादीनि हवींषि च प्रादुरिति । एषोऽर्थः शाट्यायनक-ब्राह्मणे प्रतिपादितः—"इन्द्रो वा असुरान् हत्वाऽपूत इवामेध्यो अमन्यत सोऽकामयत शुद्धमेवमासमं शुद्धेन साम्ना स्तुयुरिति स ऋषीनब्रवीत् स्तुतमिति ततएव ऋषयः सामापश्यन् तेनास्तुवन्नेतोन्विन्द्रमिति ततो वा इन्द्रः पूतः शुद्धो मेध्यो भवदिति । तथाच अस्या ऋचोऽयमर्थः—] ऋषयः परस्परं ब्रुवन्ति—"नु" क्षिप्रम् "एत उ" आगच्छतैव । आगत्य च "शुद्धेन" शुद्धत्वात्मकेन साम्ना, तथा "शुद्धैः" शुद्धि-हेतुभिः "उक्थैः" शस्त्रैश्च इन्द्रम् शुद्धमपापिनं कृत्वा "स्तवाम" स्तुयाम । ततः "साम्ना" शस्त्रैश्च "वावृध्वांसं" पाप-राहित्येन वर्धमानं तमिममिन्द्रं "शुद्धैः"

* छ० आ० ४, २, १, ९ ( १भा० ७१४पृ० ) = ऋ० वे० ६, ६, ११, २ ।

शुद्धत्पादकैर्गव्यादिभिः "आशीर्वान्" आश्रयणवान् [ "छन्द-सीरः (८, २, १५)"—इति मतुपो वत्वम्, तादृशः सोमः ] "ममत्तु" तमिन्द्रं मादयतु [ माद्यतेश्छान्दसः (२,४,७६)श्लुः ] ॥

"शुद्धैराशीर्वान्"-"शुद्धआशीर्वान्"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १ २
इन्द्रशुद्धोनआगहिशुद्धःशुद्धाभिरूतिभिः।
३ २ ३ १र २र ३ १ २
शुद्धोरयिन्निधारयशुद्धोममद्धिसोम्य ॥ २ * ॥

हे "इन्द्र!" "शुद्धः" अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं "नः" अस्मान् "आ गहि" आगच्छ "शुद्धाभिः" "ऊतिभिः" ऊतयो मरुतः [ अवन्ति सर्वत्र गच्छन्तीति वा ] तेऽपि सामभिः शस्त्रैश्च परिपूताः तैः मरुद्भिः सह "शुद्धः" पाप-रहितः त्वम् आगहि। आगत्य च "शुद्धः" त्वं "रयिं" धनं अस्मासु "निधारय" अतितरां स्थापय। किञ्च, हे "सोम्य" सोमार्ह! "शुद्धः" त्वं "ममद्धि" सोमेन माद्य [ मदी हर्षे ( दि० प० ) लोटि "बहुलम्छन्दसि" ( २, ४, ७६ )"—इति शपः श्लुः ] ॥

"ममद्धिसोम्य"-"ममद्धिसोम्यः"—इति पाठौ ॥ २ ॥

---

* ऋ० सं० ६, ६, ३१. १।

अथ तृतीया।

१ २ ३ १र० २र ३ २ ३ १र १र ३ १ २
इन्द्रशुद्धोहिनोरयिᳬंशुद्धोरत्नानिदाशुषे।
३ २ ३ १ २ ३ १र २र
शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजᳬंसिषाससि॥ ३ * ॥ ९

हे "इन्द्र!" "शुद्धः हि:" [—अवधारणे†] शुद्धएव त्वं "नः" अस्मभ्यम् "रयिं" धनं प्रयच्छ। तथा "शुद्धः" त्वं "दाशुषे" हविर्दत्तवते यजमानाय "रत्नानि" रमणीयानि कनक-गवादीनि देहि। ततः "शुद्धः" पाप-रहितः त्व "वृत्राणि" अपामावरकान् कर्म-विघ्नकारिणं शत्रून् पापानि वा "जिघ्नसे" हंसि। ततः "शुद्धः" शत्रु-हनन-दोष- परिहाराय अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं वाजमन्नमस्मभ्यं "सिषाससि" प्रदातुमिच्छसि ‡ [यदा शत्रूनहं हन्यां तदा शुद्धुत्पादकैः सामभिः शस्त्रैश्च यूयं मां परिशुद्धं कुरुतेत्येवमस्मभ्यं धनमन्नञ्च दातुमिच्छसीत्यर्थः]॥ ३ ॥९

२र र १
॥ शुद्धाशुद्धीयोत्तरम्॥ एतोन्विन्द्रᳬंस्तवा३मा। शु
२ १ १ २ २ १र
द्धᳬंशुद्ध। न। साम्ना२। शुद्धायिरु३क्था३यिः। वा
२ ५ २ १र २ १ २ १
वार२द्धा२३४ᳬंसाम्। शुद्धैरा२३शी। वान्ममत्तु। इडा

* ऋ० वे० ६, ६, ११, ४।

† 'हि तस्मादर्थे, शुद्धस्त्वं यस्मात् रयिं धनं शुद्धं निधारय'—इति वि०।

‡ 'सिषासति—साधयसि'—इति वि०।

१ र र १ १ १ र
२३ ॥(१) इन्द्रप्रदोनआगा३चो। प्रदः प्रद्दा। भिद्द।
१ १ २ २ १ २ ५
तायिभा२यिः। प्रद्दोरा३योर३म्। निधा२रा२३४या।
२ १र १ १ र २ १ १ र
प्रद्दोमा२३मा। धीसोमिय। इडा२३ ॥(२) इन्द्रप्रद्दो
र १ १र १ र १ १
चिनोरा३योम्। प्रद्दोरत्नानिदा। प्रूषा२यि। प्रद्दो
२ १ १ २ ५ २ १र २
वा३र्चा३। णिजा२प्रा२३४सायि। प्रदोवा २ ३ जाम्।
१ र २ १ १ १
सायिषासमि। इडा २ ३ भा ३ ४ ३। औ २ ३ ४ ५ ई।
डा(३) ॥ १२ * ॥ [१] ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

तृतीयः खण्डः ॥ २ ॥

---

अथ चतुर्थ-खण्डे—

अग्नेस्तोममिति तृचात्मकं सूक्तम्,

तत्र प्रथमा।

३ १र १र २ १ १ १ १ ३ १ १
अग्ने स्तोमम्मनामहे सिध्रमद्यदिविस्पृशः।
२ १ २ २ १ २
देवस्यद्रविणस्यवः ॥ १ † ॥

---

* ऊ० गा० ७प्र० २अ० १२सा०।

† ऋ० सं० ४, १, ५, २।

"द्रविणस्यवः" द्रविणं धनमिच्छन्तो वयं "दिविस्पृशः" सूर्यरूपेण आकाशं व्याप्नुवतो "देवस्य" द्योतमानस्य "अग्नेः" "सिद्धं" पुरुषार्थानां साधकं "स्तोमं" स्तोत्रम् "अद्य" अस्मिन्नहनि "मनामहे" ब्रूमः ॥ १ ॥

अथ द्वितीया।

२ १ २ ३ २ ३ २ ३ १र २र ३ २

अग्निर्जुषतनोगिरोहोतायोमानुषेष्वा।

१ २ ३ २ ३ १ २

सयक्षद्दैव्यञ्जनम् ॥ २ * ॥

"होता" देवानामाह्वाता होम-निष्पादको वा "अग्निः" "मानुषेषु" "आ" वसति। "यः" अग्निः "नः" अस्माकं "गिरः" स्तुतीः "जुषतां" सेवताम् "सः" अग्निः "दैव्यं जनं" देव-सम्बन्धिनं जनं† "यक्षत्" यजतु ॥ २ ॥

अथ तृतीया।

१ २ ३ १ १ ३ २ ३ २ ३ १ २

त्वमग्नेसप्रथाअसिजुष्टोहोतावरेण्यः।

१ २ ३ १र २र

त्वयायज्ञंवितन्वते ॥ ३ ‡ ॥ १०

* ऋ० वे० ४, १, ५, २।

† 'दैव्यं जनं—देवानां सम्भूतं वसु-रुद्र-मरुत्-प्रभृतिकं जनम्'—इति वि०।

‡ ऋ० वे० ४, १, ५, ४।

हे "अग्ने !" "जुष्टः" सर्वदा प्रीतः "वरेण्यः" सर्वैर्वरणीयः "होता" त्वं "सप्रथाः असि" सर्वतः पृथुर्भवसि.[ तथाहि यास्कः— "सप्रथाः सर्वतः पृथुः (निरु० नै० ६.७)"—इति ]। किञ्च, सर्वे यजमानाः "त्वया" साधनेन "यज्ञं" "वि तन्वते"* ॥ ३ ॥ १०

अभित्रिपृष्ठमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा ।

२ १ २ ३ १र ३ १
अभित्रिपृष्ठंवृषणंवयोधा
३ २ १ २ ३ १ २
मङ्गोषिणमवावशन्तवाणी ।
२ १ १ २ ३ १ २ ३ २उ २
वनावसानोवरुणोनसिन्धु-
१ २ ३ १ २ ३ १ २
र्विरत्नधादयतेवार्याणि ॥ १ ‡ ॥

"त्रिपृष्ठं" त्रीणि पृष्ठानि स्तोत्राणि सवनानि वा यस्य स तथोक्तस्तं "वृषणं" वर्षकं "वयोधाम्" अन्नस्य दातारम् "अङ्गोषिणम्" अपोषवन्तं सोममभिलक्ष्य "वाणीः" स्तोतॄणां वाचः "अवावशन्त" शब्दायन्ते । "वना" वनानि उदकानि "वसानः" आच्छादयन् "वरुणो न" वरुणो यथा सिन्धूनाच्छादयति तद्वत् ।

* 'ऋत्विजः विस्तारयन्ति'—इति वि० ।

† 'पञ्चमस्याह्नः सम्पत्सा'मध्यन्दिनम्'—इति वि० ।

‡ छ० आ० ६, १, ४, ६ ( २भा० १२० पृ० )=ऋ० वे० ७, ३, २६, २ ।

"सिन्धुः" स्यन्दनशीलः, "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि "दयते" प्रयच्छति स्तोतृभ्यः ॥

"अङ्गोषिणम्"-"अङ्गूषाणम्"—इति पाठौ, "सिन्धुः"-"सिन्धून्"—इति च ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ १ ३
शूरग्रामःसर्व्ववीरःसहावान्

१ २ ३ १ २ ३ १ २
जेतापवस्वसनिताधनानि।

३ १ २ ३ १ २ ३ १र
तिग्मायुधःक्षिप्रधन्वासमत्स्

२र ३ १र ३र १ १ २
स्वषाढःसाह्वान्पृतनासुशत्रून्॥ २* ॥

हे सोम! त्वं "पवस्व"। कीदृगस्त्वम्? "शूरग्रामः" शूराणां ग्रामः सङ्घो यस्य सः, "सर्व्ववीरः" सर्व्वे वीरा यस्य स तथोक्तः, "सहावान्" सहनवान् "जेता" जयशीलः "सनिता" सम्भक्ता "धनानि" धनानां, "तिग्मायुधः" तीक्ष्ण-प्रहरण-साधनः,† "क्षिप्रधन्वा" क्षिप्र-सहनशील-धन्वा, "समत्सु" सङ्ग्रामेषु "अषाढः" असोढ़ा, "साह्वान्" अभिभवन्। कुत्र? "पृतनासु" शत्रु-सेनासु। कान्? "शत्रून्" ॥ २ ॥

* ऋ० वे० ७, ३, २६, ३।

† 'तीक्ष्णायुधः—असि-परशु-पाश-प्रभृतिभिरायुधैः सम्पन्नः'—इति वि०।

अथ तृतीया ।

३ १ २ ३ १ २ २ १
उरुगव्यूतिरभयानिकृण्वन्
२ ३ १र २र ३ १ २
समीचीनेआपवस्वापुरन्धी ।
३ १र २र ३ २ ३ १र १र
अपःसिषासन्नुषसःस्वा*ऽ३ऽर्गाः
२र ३ २ ३ २ ३ १ २
सञ्चिक्रदोमहो अस्मभ्यंवाजान् ॥ ३† ॥ ११

हे सोम ! "उरुगव्यूतिः" विस्तीर्ण-मार्गः त्वम् "उभयानि" स्तोतृभ्यः "कृण्वन्" कुर्वन्, "पुरन्धी"‡ इमे द्यावापृथिव्यौ "समीचीने" सङ्गते कुर्वन्, "आ पवस्व" आक्षर । "अपः" "उषसः" "स्वः" आदित्यं "गाः" रश्मींश्च "सिषासन्" सम्भक्तुमिच्छन् "सं चिक्रदः"¶ सङ्क्रन्दसे । "महः" महतः महान्ति "वाजानि" अन्नानि अस्मभ्यं दातुमिति शेषः ॥ ३ ॥ ११

० १ ५ २ ३र २
॥ सम्पावैयश्वम् ॥ ओ३हायि । ओ३हा । ओहा ।
१ ५ २ २ २ २ १ २ ३
हुयार । ओ३हा३ए । अभित्रिपा । ष्ठा३वृष । णम्व

---

* "स्व"—इति ऋ० पाठः ।

† ऋ० वे० ७, ३, २६, ८ ।

‡ 'पुरं धारयितः'—इति वि० ।

¶ 'चिक्रदः—शब्दं कुर्वन्—इति वि

४ ५ २ १र २ १र २ ३ ४ ५ २
योधाम्। अङ्गोषिणाम्। अवाव। ग्नवाणीः। व

१र २ १ २ ३ ४ ५ १ २ १
नावसा। नो३वरु। णोनसिधूः। विरलधाः। दय

र १ २ ४ १र १ र
ते। वा३४३। रीया५णाइ५६यि॥(१) शूरग्रामाः।

२ १र २ ३ ४ ५ १र १र २ १ २
सर्ववी। रःसहावान्। जेतापवा। स्वा३सनि। ता

३ ४ ५ ० १र २ १ २ ३ ४ ५ २ १र
धनानी। तिग्मायुधाः। क्षिप्रध। न्वासमत्सु। षषा

२ १ २ २ ४
ढःसा। क्षा३न्यूत। ना३४३। सूश्रा५त्रू६५६न्॥(२)

२ १ २ २ ३ ४ ५ २ १र र
उरुगव्य। तो३भर। यानिष्कृपवान्। समीचीने।

२ १ २ ३ ४ ५ २१ २ २ २
आ३पव। स्वापुरन्धी। पपःणिषा। सा३नुष। सः

३ ४ ५ २ १ १ २ २र २ १
सुवर्गाः। ओ३हायि। ओ३वा। ओहा। इया२।

४ २ २ १ १र २ २
ओ३हा३ए। सञ्चिकदो। महोप। म्मा३४३। भ्या

४
वा५जा६५६न्(३)॥ १७* ॥ [१] ११

* क० गा० ७प्र० १ष० १७मा०।

अथ त्वमिन्द्रेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २र ३ १ २
त्वमिन्द्रयशाअस्यृजीषीशवसस्पतिः।
२ ३ १ २ १ २३ २ १ ३ १ २ ३ १ २
त्वंवृत्राणिहᳫंस्यप्रतीन्येकइत्पूर्वनुत्तश्चर्षणीधृतिः॥ १* ॥

हे "इन्द्र!" "त्वं" "शवसस्पतिः" शवसोऽन्नस्य बलस्य वा पालयिता, "ऋजीषी" ऋजीषोऽभिषुतः सोमः तद्वान्, त्वं "यशा असि" यशस्वी भवसि। कथमस्य यशस्वित्वं? तदाह-- "अप्रतीनि" बलिभिरपि अप्रतिगतानि "वृत्राणि" रक्षांसि "अनुत्तः" अन्यैर्नेतुमशक्यः त्वम् "एकइत्" एकएव असहाय एव "चर्षणीधृतिः" रक्षात्वेन यजमानादि-मनुष्याणां धारकः "पुरु" बहुलं यथा भवति तथा "हंसि" सम्प्रहरसि। अतएवास्य यशस्वित्वम्॥

"शवसस्पतिः"-"शवसस्पते"—इति पाठौ, "इत्पूर्वनुत्तश्चर्षणीधृतिः"—"नएकइदनुत्ताचर्षणीधृता"—इति च॥ १॥

अथ द्वितीया।

१ २ ३ १ २ २ १ २ ३ १ २ ३ १ २
तमुत्वानूनमसुरप्रचेतसᳫंराधोभागमिवेमहे।
३ २ ३ १ २ ३ १ २ ३ १२ ३ १ २
महीवकृत्तिःशरणातइन्द्रप्रतेसुम्नानोअश्नवन्॥ २† ॥ १२

* छ० आ० ३, २, १, ६ (१ भा० ५.१२४०)=ऋ० वे० ६, ६, १३, ५।

† ऋ० वे० ६, ६, १३, ६।

हे "असुर" बलवत्! प्राणवत्! वा हे "इन्द्र!" यः उक्त-गुणोऽस्ति "तं" च "प्रचेतसं" प्रकृष्ट-ज्ञानं "त्वा" "उ" [—इत्यव-धारणे] पितृवत् पोषकं त्वामेव "राधः" धर्मादि-साधनं धनं "नूनम्"*इदानीम् "ईमहे" याचामहे। तत्र दृष्टान्तः—"भाग-मिव" यथा कश्चित् पितृतो भागभूतं धनं याचते, तद्वत्; इन्द्रो यजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव तस्मात् भागभूतं धनं यष्टारो वयं याचामहे। किञ्च हे इन्द्र! "महीव कृत्तिः" [कृत्ति-र्यशोऽन्नं वा कृतीच्छेदने (रु० प०) करणे क्तिन्। कृतन्त्यनेनेति, इदृशी] कृत्तिरिव "ते" तव "शरणा" शरणं गृहम् अन्तरिक्षं द्युलोके महद् वर्त्तते [अत्र यास्कः—"कृन्ततेर्यशोवान्नं वा। महीव कृत्तिः शरणा त इन्द्र। सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिव (निरु० नै० ५, २२)"—इति]। किञ्च, "ते" तव स्व-भूतानि "सुम्ना" सुम्नानि मन्त्रादि-विषय-सुखानि च "नः" अस्मान् "प्राश्नुवत्" प्रकर्षेणाश्नुवतां व्याप्नुवन्तु [अश्नोतेर्लेट्यडागमः (३, ४, ९४)]॥ २॥ १२

५ ४ २ ४ ५र ४र ५ १
॥ अभीवर्त्तम्॥ तुवा३मा३यिन्द्रयशा३सोवा। आ

र १र १ २ १ २ ३
ज्जोषोश्र। वसास्या१ता२यिः। तुवम्वृत्रा३१२३४। णि

४ ५ र र २ १ २ १ २
घ्न्ऌस्यप्रतीनिए। कआयित्पू१रु२। 'अनूत्ता१श्चा२।

३ २ १ ३ १ १ १ १ ५ ४ २ ४
षणा३यि। धार३४५। तार३४५मिः॥(१) अनू३त्ता३श्च

---

* 'निश्चितम्'—इति वि०।

५र ४ ५ १ २ १ २ १
षणीधृतोवा । आनुत्तस्व । षणायिधा१र्त्ता२यिः । ता
र २ ३ ४५ २१ २ र १
मुत्वानू३१२३४ । नमस्तुर । प्रचायिता१सा२म । राधो
२ ३ २ १ ३ १ १ १ १
भा१गा२म । इवा३यि । मा२३४५ । हा२३४५यि ॥(२)
५र४ २ ४ ५र ४ ५ १ र २र १ २
राधो३भा३गमिवेमहोवा । राधोभागम् । इवायिमा१
१ र १ ३ ४ ५र २ १ २
हा२यि । माहोवका३१२३४ । तिःशरणा । नआआ१
१ २ ३र २ १
यिन्द्रा२ । प्रतायिस्व१म्ना२ । नोआ३ । आ२३४५ ।
३ १ १ १ १
वा२३४५न(३) ॥ १८* ॥ [१]

॥ दिविदिङ्कारम्वामदेव्यम् ॥ २१ ४ ५र
तुवमा२३यिन्द्रयशाअसा
१र र र र ऽ
यि । आज्ओषीशवसस्पतिस्त्वमवृत्राणिहꣳस्यप्रतीनआयि
१ ३र २ १ १ १ १ १ ३र २
कओहो३ । ऊम्मा२ । पू२३रू । अनुत्तस्वार्षणीहो३ ।
१ १ ४ ५ २ १ ४
ऊम्मा२ । धृतायिः । औ२३होवा ॥(१) अनुत्ता२३स्व ।
५र १ र रर २
षणीधृतायिः । ० आनुत्तस्वर्षणीधृतस्तमुत्वानूनमस्तुराऽप्र

---

* ऊ० गा० ७प्र०२अ० १८सा०।

२र २ १ १ २ १र र र १ २र
घोहोइ। ऊम्मा२। ता२३साम्। राधोभागाऽमिवी
२ १ १ २ ४ ५ २र१र
होइ। ऊम्मा२। मद्दा। औ३होवा॥(२) राधोभा
४ ५र १ र र र र र
३गमिवेमहायि। राऽधोभागमिचेमहेमहोवक्त्राक्ति:शरण्या
२ २र २ १ १ २ १र २
ऽतम्मोहोइ। ऊम्मा२। आ२३यिन्द्रा। प्रतेसुम्नाऽन
२र २ १ १ ४ ५ ५
घौहोइ। ऊम्मा२। अवान्। औ२३होवा। ह्रो५ई।
डा(३)॥७*॥ [२]

११ १ २१र २ र
॥यश्म्॥ त्वमिन्द्रा। यशाः। असायि। ऋजी
१र २ १ २ २ १ ३२ १ र
षोभ्रवसः। पतायिः। त्वम्वृत्राणीइहऽसिया। प्रती
१ २ १ ३ ५र र
नाए२। कद्रत्पूरु२हो१। तस्थ। षा२णा२३४औहो
३ ५ १२ १ २ १र
वा। धा२३४र्त्ताः॥(१) अनुत्तश्चा। अनुत्तश्चा। षणी।
२ र १ २ र २
धृतायिः। अनुत्तस्वर्षणी। धृतायिः। तमुत्वानू३नम
३ २ १ १ १र
सुरा। प्रावा२यि। तामा२म्। राधा२हो१यि।

ऊ० गा० १६प्र० २ख० ७सा०।

र २ १ २ ५र र ३ ५
भागम्। आ२यिवा२३४औहोवा। मा २ ३ ४ हे ॥(२)
१र२ र १ २र र र १र र र
राधोभागाम। राधोभागाम्। इवे। महायि। राधो
२र १ २र २ २ र २ ३ २ १
भागमिवे। महायि। महोवकाइर्त्तिःशरा। णाता२
१ १ २र २
यि। आयिन्द्रा२। प्रता२यिहो१यि। सुम्ना। नो२
३ ५र र ३ ५
आ२३४औहोवा। आ२३४वान्(३)॥ १४ * ॥ [३] १२

यजिष्ठन्त्वेति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ १र ३ १ २
यजिष्ठन्त्वाववृमहे देवन्देवत्रा होतारममर्त्त्यम्।
३ २ ३ १ २ ३ १ २
अस्ययज्ञस्यसुक्रतुम्॥ १ † ॥

हे अग्ने! "यजिष्ठं" यष्टृतमं "त्वा" त्वां "ववृमहे" वृणीमहे सम्भजामहे। कीदृशं त्वाम्? "देवत्रा" देवेषु मध्ये "देवम्" अतिशयेन दानादि-गुणकम्, "होतारं" देवानामाह्वातारम्, "अमर्त्त्यम्" अविनाशिनम्, "अस्य" "यज्ञस्य" यागस्य "सुक्रतुं" सुष्ठु कर्त्तारम्॥ १॥

* ऊ० गा० १८प्र० १ख० १४गा०।

† ऋ० सं० ३, १, ९, ६ (१भा० २८३ प०) = ऋ० वे० ६, १, १६, ३।

अथ द्वितीया ।

२ १　　 २र　 ३ १ २　 ३ १ २　　 ३ २ ३ १ २
अपान्नपातꣳसुभगꣳ*सुदीदितिमग्निमु श्रेष्ठ† शोचिषम् ।
१ २ ३ १ ३ १ २　 ३ २ ३ २उ　 ३ १ २　　 ३ २
सनो मित्रस्य वरुणस्य सो अपामा सुम्नं यक्षते दिवि ॥ २‡ ॥१३

"ऊर्जः" अन्नस्य "नपातं" न पातयितारं¶ [ यद्वा, नप्तारं चतुर्थं हविर्लक्षणेनान्नेन आपो जायन्ते, अद्भ्य ओषधि-वनस्पतयस्तेभ्य एष जायत इति चतुर्थत्वम्§। "नभ्राण्नपात् ( ६, ३, ७५ )"—इति नञः प्रकृतिभावः ] "सुभगं" शोभन-धनं "सुदीदितिं" सुष्ठु दीदयन्तं "श्रेष्ठशोचिषं" प्रशस्यतम-तेजस्कम् अग्निं स्तौमीति शेषः। स तादृशोऽग्निः "नः" अस्मदर्थं "दिवि" द्योतमाने देवयजने द्युलोके वा "मित्रस्य" देवस्य "वरुणस्य" च "सुम्न" सुखम् "आ" अभिलक्ष्य "यक्षते" यजतु। तथा सोऽग्निः "अपाम्" अब्देवतानाञ्च सुम्नमभि यजतु ॥ २ ॥ १३

　　　 २　　　 ४ २ ४ ५
॥ साध्यम् ॥ याऽ५जि । छन्त्वा३वा३वा३वृमद्दायि ।
२र १ र　 र र　　 २　　 १ २　　 १ ७
देवन्देवत्रा होता२३राम् । आमर्त्तियम् । आस्वयाज्ञा

* "ऊर्जोनपातं"—इति ऋ० पाठः।

† "अग्निं श्रेष्ठ"—इति च ऋ०-पाठः।

‡ ऋ० वे० ६, १, २९, ४।

¶ ऋग्वेदीयपाठमवलम्ब्यैवं व्याख्यानम्।

§ 'अपां नपातम्—अपां पौत्रमग्निम्। अपां पुत्रका वृक्षाः, तेषु सञ्जातं पुत्रं पौत्रम्'—इति वि०।

१ ४ २ ५ २
२३ । स्या२३सू३ । का३४५तोइ्हायि ॥(१) आऽ५प्स्य ।
४ २ ४ ५ ३ १र र २ १ र
यज्ञा३ख्या३सुक्रतूम् । अपान्नपात९ँसुभा२३गाम् । सुदी
२ १ ७ १ ४ २
दितिम् । आग्निमू्श्रे२३ । ष्ठा२३शो३ । चा३४५यिषो
५ ३ ४ २ ४र ५ १
इ्हायि ॥(२) आऽ५ग्निम् । उश्रे३ष्ठा३शोचिषाम् । स
र २ १ र २ र १ ७
नोमित्रस्यवरू२३णा । स्यासोअपाम् । आसुम्नाया२३ ।
१ ४ २ ५
या२२ता३यि । हा३४५यिवोइ्हायि(३) ॥ २* ॥ [१]

२ र १ २ र १ र
॥ ऐध्मवाहसम् ॥ यजिष्ठन्त्वाववृमाहायि । देवन्देव
र र र
त्राहोतारममर्त्तियाम् । अस्ययज्ञस्यसुद्दूहा । अस्ययज्ञ
१ ५ ४ ५
स्यसूऽदूहा । जयायि । जयो२३४वा । का५तोइ्हा
२ १ २ १र र
यि ॥(१) अतायज्ञस्यसुक्रातूम् । अपान्नपात९ँसुभग९ँ
र र र र र
सुदीदितायिम् । अग्निमुश्रेष्ठशोइहा । अग्निमुश्रेष्ठाशो
५ ४ ५
ऽइहा । जवायि । जवो२३४ । वा । चा५यिषोइ्हा

* क० गा० ८प्र० १ख० २सा० ।

२ र र र १ र
यि ॥(२) अग्निमुश्रेष्ठशोचायिषाम् । सुनोमित्रस्यवरुण
र ६
सोमपाम् । आसुम्नंयक्षताऽइहा । ऊवायि । ऊवोर
५ ४ ५
३४ । वा । दा५यिवोईहायि(३) ॥ ३* ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चम-खण्डे—

यमग्नइति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २उ ३ २ १ १ २ ३ २ ३ २
यमग्नेपृत्सुमर्त्त्यमवावाजेषुयञ्जुनाः ।
२उ ३ १ २ १ १ २
सयन्ताशश्वतीरिषः† ॥ १‡ ॥

हे "अग्ने !" "पृत्सु" सङ्ग्रामेषु "यं" "मर्त्यं" यजमानम् "अवाः" अवसि रक्षसि, "यं" पुरुषं "वाजेषु" सङ्ग्रामेषु "जुनाः" अवसि, "सः" नरः यजमानः "शश्वतीरिषः" नित्यान्न-

---

* ऊ० गा० १८प्र० १ख० ३गा० ।

† "स्वाहा"—इति यजुष्यधिकः पाठः ।

‡ ऋ० वे० १, ९, २२, २ = य० वे० ६, २९ ।

आनि "यन्ता" नियन्तुं समर्थो भवति [पृत्सु—"पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम् (६,१,६३)"—इति पृतना-शब्दस्य पदादेशः "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्। अवाः—अवः अकाराकारयोर्विपर्य्ययः, यद्वा लेटाऽडागमः, "इतश्च (३, ४,९७)"—इति सिप इकार-लोपः। जुनाः—जुइति गत्यर्थः सौतो धातुः, लङ्, सिप्, क्र्यादिभ्यः श्ना ; "बहुलञ्छन्दस्यमाङ्योगेऽपि (६,४,७५)"—इत्यडागमाभावः ; यद्वृत्तयोगात् (८,१,३०)" अनिघातः। यन्ता—तृनो नित्स्वादाद्युदात्तत्वम् (६,१,१९७)। शश्वतीः—"उगितश्च (४,१,६)"—इति ङीप्॥ १ ॥

अथ द्वितीया।

१ २ ३ १र २र
नकिरस्यसहन्त्यपर्य्येताकयस्यचित्।

१ २ ३ १ २
वाजोअस्तिश्रवाय्यः ॥ २* ॥

हे "सहन्त्य!" शत्रूणामभिभवन-शीलाग्ने! "अस्य" त्वद्भक्तस्य यजमानस्य "कयस्यचित्" कस्यापि "पर्य्येता नकिः" आक्रमिता नास्ति। किञ्चास्य यजमानस्य "श्रवाय्यः" श्रवणीयः "वाजः अस्ति" बल-विशेषोऽस्ति† ॥ २ ॥

---

* ऋ० वे० १, १, २३, ९।

† 'वाजमन्न'—इति वि०।

अथ तृतीया।

१२ २र,३१२ ३१२ ३१२
सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता।
१२ ३१२
विप्रेभिरस्तुसनिता॥ ३*॥ १४

"विश्वचर्षणिः" सर्वैर्मनुष्यैरुपेतः† "सः" अग्निः "अर्वद्भिः" अश्वैः‡ "वाजं" सङ्ग्रामं "तरुता" तारयिता "अस्तु" "विप्रेभिः" मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः "सनिता" फलस्य दाता¶ [ विश्वचर्षणिः—विश्वे चर्षणयः अस्य "बहुव्रीहौ विश्वं सञ्ज्ञायाम् ( ६, २, १०६ )"—इति पूर्वपदान्तोदात्तत्वम्। अर्वद्भिः—ऋ गतौ ( भ्वा० प० ), "अन्येभ्योऽपि दृश्यते ( ३,२,७५ )"—इति वनिप्, भिसि "अर्वणस्त्रसावनञः (६, ४, १२७ )"—इति नकारस्य तृ-इत्ययमादेशः। तरुता—तॄ प्लवन-तरणयोः (भ्वा०प०), अस्मात् "ग्रसित-स्कभित- (७, २, ३४ )—इत्यादौ तृन्नन्तो निपातितः, निपातनादेवेकारस्योत्वम् ] ॥ ३ ॥ १४

---

* ऋ० वे० १, १, २३, ४।

† 'विश्वस्य द्रष्टा'—इति वि०।

‡ 'अर्वद्भिः—तृतीयाबहुवचनं चतुर्थीबहुवचनस्य स्थाने द्रष्टव्यम्, अर्वद्भ्यः'—इति वि०।

¶ 'विप्रेभिः—विप्रेभ्यः सनिता, त्वां मुक्त्वा न कश्चिदन्यो दाता'—इति वि०।

अथ साकमुच्च इति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

२ १२ ३ १ २ ३
साकमुक्षोमर्ज्जयन्तस्वसारो

२ ३ १ २ ३ २ ३ १ २
दशधीरस्यधीतयोधनुत्रीः ।

२ ३ १ २ ३ १र २र ३
हरिःपर्यद्रवज्जाःसूर्य्यस्य

१ २ ३ २ ३ २ ३ २
द्रोणन्ननक्षे अत्योनवाजी ॥ १* ॥

"साकमुचः" सह युगपत् सिञ्चयः [उक्ष सेचने (भ्वा०प०) क्विपि रूपम्, तादृश्यः] "स्वसारः" कर्म्म-करणार्थम् इतस्ततः सुष्ठु गच्छन्त्यः अङ्गुलयः "मर्जयन्त" सोमं शोधयन्ति [मृज् शोधनालङ्करणयोः (अदा० प०)]। तथा "दश" दश-सङ्ख्याकाः "धीतयः" [अङ्गुलि-नामैतत् (निघ० २, ५, ७)] "धीरस्य" समर्थस्य यज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति। ततः "हरिः" हरितवर्णः सोमः "सूर्यस्य" "जाः" प्रादुर्भूता जाया दिशः ताः "पर्यद्रवत्" परितो गच्छति [सूर्यस्य तेजसा हि आविर्भवन्तीति दिशान्तस्य जायात्वम्] "अत्यः" अतनशीलः "वाजी न" अश्व इव स्थितः सोमः "द्रोणं" द्रोणकलशं "ननक्षे" व्याप्नोति [नक्षतिर्व्याप्तिकर्मा (निघ० २, १८, २)] ॥ १ ॥

* ऋ० भा० ६, १, ५, ६ (२भा० ११६४०) = ऋ० वे० ७, ४, २, १।

अथ द्वितीया ।

२ ३ १ २　२र　३ १र
सम्मातृभिर्न्नशिशुर्वावशानो
२र　३ १ २ ३ २
वृषादधन्वेपुरुवारोअद्भिः ।
२ ३ १र २र३ १ २ ३ १र
मर्योनयोषामभिनिष्कृतंयत्
२र　३ १ २ ३ १ २
सङ्गच्छतेकलशउस्रियाभिः ॥ २* ॥

"वावशानः" देवान् कामयमानः "वृषा" कामानां वर्षकः अतएव "पुरुवारः" बहुभिर्वरणीयः सोमः "अद्भिः" मातृभूताभिः वसतीवरीभिः "सं दधन्वे" सन्धार्यते । तत्र दृष्टान्तः—"मातृभिर्न शिशुः" कामयमानः पुत्रो यथा मातृभिः पयःप्रदानेन सन्धार्यते [धवि गत्यर्थः (भ्वा० प० ) कर्म्मणि लिटि रूपम्] "मर्यो न" मनुष्यो यथा "योषां" युवतिम् अभिगच्छति तद्वत्, "निष्कृतं" संस्कृतं स्वस्थानम् "अभि यन्" अभिगच्छन् "कलशे" द्रोणाभिधाने "उस्रियाभिः" अद्भिः गोविकारैः क्षीरादिभिर्वा "सङ्गच्छते" [ गमेरकर्मकात् "समोगम्यृच्छिभ्याम् ( १, ३, २९ )"—इत्यात्मने पदम् ॥ २ ॥

---

* ऋ० वे० ७, ४, ३, २ ।

† 'आदित्यरश्मिभिः'—इति वि० ।

अथ तृतीया।

३ १र २र ३ २ ३ १ २ ३
उत प्र पिप्य ऊधरघ्न्याया

२ ३ १ २ ३ १
इन्दुर्धाराभिः सचते सुमेधाः।

३ २ ३ २ ३ १ २ ३ २ ३ १
मूर्द्धानं गावः पयसा चमूष्वभि

२ ३ १ २ ३ २ ३ २
श्रीणन्ति वसुभिर्न निक्तैः॥ ३*॥ १५

"उत" अपि च "अघ्न्यायाः" ["अघ्न्या"—इति गो नाम (निघ० २, ११, १)] अहं तथाविधाया गोः "ऊधः" पयःस्थानं सोमः "प्रपिप्ये" ओषध्यादिषु सोमः प्रविश्य प्रकर्षेण प्याययति [प्यायतेर्लिङि "लिङ्यङोश्च (६, १, २९)"—इति पी-भावः] "सुमेधाः" शोभन-प्रज्ञः सोऽयम् "इन्दुः" सोमः "धाराभिः" "सचते" समवेति सङ्गच्छते। ततो "गावः" "चमूषु" [चमन्ति भक्षयन्त्यत्र सोममिति चम्वो ग्रहादयः, तेषु] स्थितं "मूर्द्धानं" समुच्छ्रितमिमं सोमं "पयसा" उदकेन "अभि श्रीणन्ति" अभित आच्छादयन्ति†। तत्र दृष्टान्तः—"निक्तैः" प्रक्षालितैः "वसुभिः" वस्त्रैः यथा आच्छादयन्ति तद्वत्॥ ३॥ १५॥

* ऋ० वे० ७, ४, २, ३।

† 'अभिश्रीणन्ति मिश्रयन्ति'—इति वि०।

॥ इन्द्रस्य ब्रह्मासिष्ठम् ॥ औहोवाचा३ होयि । इन्द्रा । साकमुक्षो । मर्जय । तस्वसारा: । दशधीरा । स्या इधीत । योधनूची: । हरि:पर्य्या । द्रवञ्जा: । हरि यस्या । द्रोणन्नना । से३अति । यो३४३ । ना३वा५ जा६ ५ ६यि ॥(१) समातृभायि: । नमिष्ठ्रु: । वाकस्रा ना: । वृषादधा । स्वे३पुरु । वारोअच्छायि: । मर्य्यो मयो । षा३मभि । निष्कृतंयान् । सङ्च्छतायि । क लशे । ऊ३४३ । सो३या५भा६५६यि: ॥(२) उतप्रपायि । प्या३ऊध: । अघ्नियाया: । इन्दुर्द्धारा । भी३:सच । तेसुमेधा: । मूर्द्धानङ्गा । वा३:पय । साचमष्। औ होवाचा३होयि । इन्द्रा । चौभिश्रीणा । ती३वसु । भा ३४३यि: । ना३ना५यिक्ता६५६यि:(३) ॥ ७ ॥ [१]

* ऊ० गा० ८प्र० १ख० ७षा० ।

२ २ २ र १ २ १
॥ पार्थम् ॥ ओ३हो३होयि। साकमुक्षो। मर्ज्जं
१ २ ४ ५ २ १र २ १ १ २ ४
य। तस्वसाराः। दशधीरा। स्या३धीत। योधनु
५ २ १ २ १ २ २ ३ ४ ५ २र १
ष्वौः। हरिःपर्य्या। द्रवज्जाः। हरियस्या। द्रोणन्न
२ १ २ २ ४
ना। क्षे३अति। यो३४३। ना३वा५जा६५६यि ॥(१)
२ र १ २ १ २ ३ ४ ५ २ र १
सम्मातृभायिः। नभिप्रुः। वावशानाः। वृषादधा।
२ १ २ ३ ४ ५ २ र १ २ १ २
न्वे३पुरु। वारोअज्ञायिः। मर्य्योनियो। षा३मभि। नि
३ ४ ५ २ १ २ १ र २
ष्कृतंयान्। सञ्जच्छतायि। कलशे। ऊ३४३। स्त्रौ
४ २ १ २ १र २ ०
३या५भा६५६यिः ॥(२) उतप्रपायि। प्या३ऊधः। अघि
४ ५ २ १र २ १ २ ३ ४ ५ २र र
यायाः। इन्दुर्द्धारा। भो३ःसच। तैसुमेधाः। मूर्द्धा
१ २ १ २ ३ ४ ५ २ २ २
नङ्गा। वा३ःपय। साचमूष्। औ३हो३होयि। अभि
२र २ १ २ २ ४
श्रीणा। तो३वस्तु। भा३४३यिः। ना३ना५यिक्ता६५६॰
यिः(३) ॥ ८ ॥ [२]

---

* छ० गा० १२३६ १भा० ८वा० ।

१ १ १ र २
॥ औशनम् ॥ साकाम्। उक्षोमर्ज्जयन्ता। स्वसा

२ १ २र १ २ १र १र ३ ४ ५ १
३राः। दशधीरा। स्या३धीत। योधनुत्रीः। हरिः

र १ २ र १ २ १ २ १
पर्य्यद्रवञ्जाःसू। रियार३स्या। द्रोणन्नना। से३अति।

२ २ ४ १ २ १
यो३४३। ना३वा५जा६५६यि॥(१) साम्मा। नृभिर्म्म

२ २ १ २ १ २ १ २
शिभुर्वा। वशा३नाः। वृषादधा। न्वे३पुरु। वारो

४ ५ १ र र १
अञ्जायिः। मर्य्योनयोषासभिनायिः। कृतार३यान्।

१ १ १ २ १ र २ २ ४ २
सङ्गच्छतायि। कलशे। ऊ३४३। स्नी३या५भा६ ५ ६

१ १ र २ १
यिः॥(२) जता। प्रपिप्यऊधरा। धिया३याः। इन्द्र

२र १ २ १ १ २ ३ ४ ५ १र र र
द्वीरा। भी३ःसच। तेसुमेधाः। मूर्द्धानङ्गावःपयसा।

७ २ र २ १ २ २
चमू२३षू। अभिश्रीणा। ती३वसु। भा३४३यिः। ना

४
३ना५यिक्ता६५६यिः(३)॥ ४॥ [३] १५

* ऊ० गा० १८प्र० २ख० ४सा०।

अथ पिबासुतस्येति प्रगाथात्मकं तृतीयं सूक्तम् —

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

पिबासुतस्यरसिनोमत्स्वानइन्द्रगोमतः ।

३ १ २ ३ १ २ ३ २ १ २ ३ १ २

आपिर्नोबोधिसधमाद्येवृधे३ऽस्माँ३अवन्तुतेधियः ॥ १* ॥

हे "इन्द्र !" "रसिनः" रसवतः "गोमतः" गोर्विकारैः पयः-प्रभृतिभिः अपण-द्रव्यैर्युक्तस्य "नः" अस्मदीयस्य "सुतस्य" अभिषुतस्य ["क्रियाग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे (२, ३, ६२.)—षष्ठी] ईदृशं सोमं "पिब", पीत्वा च "मत्स्व" हृष्टो भव । अपि च त्वं "सधमाद्ये" सह मादयितव्ये सहितैरस्माभिस्तर्पयितव्ये सोमे "आपिः" आपयिता बन्धुः सन् "नः" अस्माकं "वृधे" वर्द्धमानाय "बोधि" बुध्यस्व "ते" त्वदीया "धियः" बुद्धयः अनुग्रहात्मिकाः "अस्मान्" स्तोतॄन् "अवन्तु" रक्षन्तु ॥

"सधमाद्ये"-"सधमाद्यः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २

भूयामतेसुमतौवाजिनोवयम्मानस्तरभिमातये ।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

अस्माञ्चित्राभिरवतादभिष्टिभिरानःसुम्नेषुयामय ॥२†॥१६

* छ० आ० ३, ४, ५, ७ (१भा० ४९५पृ०) = ऋ० वे० ५, ७, २५, १ ।

† ऋ० वे० ५, ७, २५, २ ।

हे इन्द्र! "सुमतौ" शोभनायां बुद्धौ अनुग्रह-बुद्धौ "वाजिनः" हविष्मन्तो वयं "भूयाम" वर्त्तमाना भवाम "अभिमातये" अभिमन्यत इत्यभिमातिः शत्रुः * तस्मै तदर्थं "नः" अस्मान् "मा स्तः" माहिंसीः [स्तृञ् हिंसायाम् (क्र्या० प०) माङि लुङि छान्दसश्चे लुक्]। अपितु "अभिष्टिभिः" अभ्येषणीयाभिः प्रार्थनीयाभिः "चित्राभिः" चायनीयाभिः बहुविधाभिर्वा त्वदीयाभिः "ऊतिभिः" "अस्मान्" "अवतात्" [अव रक्षणे (भ्वा० प०)]। तथा "नः" अस्मान् "सुम्नेषु"† सुखेषु "आ यामय"‡ आयतान् कुरु सर्वदा सुखिन एव कुरु॥ २॥ १६

॥ अभीवर्त्तम्॥ पिबा३सू३तस्यरसिनोवा। मात्स्वान इ। द्रगोमा१ता२ः। आपिर्नोवा३१२३४। धिसधमा। दियेवा१द्धा२यि। अस्माँ३आ१वा२। तुता३यि। धा २३४५। या२३४५ः॥(१) अस्मा३आ३वन्तुतेधियोवा। आस्मा अव। तुतायिधा१या२ः। भूयामता३१ २ ३ ४ यि। सुमतौवा। जिनोवा१या२म्। मानास्ता१रा२।

* 'अथवा कश्चिद्रोगः'—इति वि०।

† 'सुम्नेषु—यज्ञेषु'—इति वि०।

‡ 'व्याप्नुयेत्यर्थः'—इति वि०।

३ २ १ ३ ११११ ५र ४ २
भिमा३। ता२३४५। या२३४५यि ॥(२) माना३स्ता३

४ ५र ४ ५ १ २ १ २ १ र
रभिमातयोवा। मानस्तर। भिमाता१या२यि। श्रास्मा

२ ३ ४ ५र २ १ २
भिचा३१२३४। भिरवतात्। अभायिष्टा१यिभा२यिः।

र १ २ ३ २ १ २ १ १
आनाः ह्वा१म्ना२यि। षुया ३। मा २ ३ ४ ३। या २ ३

१ १
४५(३) ॥ ८* ॥ [१]

४ ३र ४ ३ ४ ५ ४ ५ र ३ २
॥ उत्सेधम् ॥ पिबासुतस्यरसिनः। मत्स्वा। नश्पा

३र ४र ५ २ १र २
३४औहोवा। द्रगोमताऽ२ः। हा३१उवा२३। ऊ३४

५ ३र २ ४र ५र ४ ५ १ २१
पा। आपा३यिर्नोबो। औहोवाहायि। धायिसधमा।

२ र १ २र २ ५ ३ २
दियेवार्द्धं। हा३१उवा२३। ऊ३४पा। अस्मा

४ ५र ४ ५ ३ २ ४
३ऽवव। औहोवाहायि। तुता३यिधा५या६५६ः ॥(१)

४ ३र ४ र ५र र १ २ ३र ४ ५
अस्मा ऽवन्तुतेधियो। स्मान्। अवा ३ ४ औहोवा।

२ १र २ ५ ३ २र ४
तुतेधियाऽ२ः। हा३१उवा२३। ऊ३४पा। भूया३म

* ऊ० गा० ८प्र० १अ० ८सा०।

ता । औहोवाहायि । वमतीवा । जिनोवायम् । हाउ१उवा२३ । ऊ३४पा । मानाउस्तर । औहोवाहायि । भिमाउतापुयाइ५इ ॥(१) मानस्तरभिमातये । मानः । स्तरा३४औहोवा । भिमातयाऽ२यि । हाउ१उवा२३ । ऊ३४पा । अस्मा३श्चित्रा । औहोवाहायि । भायिरवतात् । अभिष्टायिभिः । हाउ१उवा । ऊ३४पा । आना३ःसुम्ने । औहोवाहायि । पुया३मापुयाइ५इ । ऊ२३४५(३) ॥ १५* ॥ [२]

॥ निषेधम् ॥ पिबासुतस्या३रसिनाः । मत्स्वानआयि । द्रगोमता२ः । इद्दा३ । आपा३यिन्नोंबो । हाहो२३४हा । धायिसधमा । दिव्ये़भ्य२३द्भूायि । इद्दा३ । आभा३८आवा । हाहो२३४हा । तुता३यिधापुयाइ५

* ऊ० गा० १२प्र० १ख० १५सा० ।

२ र २र १ २ १ १र १
ई:। अस्माँ३अवन्तू३तेधियाः। अस्माँऽऽवा। तुतेधि

१ २ १ २ ४ ५ २ ३ ५ १
या २:। इहा३। भूया३मातायि। हाहो२३४हा। सू

२र १ २ र १ २ १ २ १ २ ४ ५
मतीवा। जिनोवा२३याम्। इहा३। माना३स्तारा।

२ ३ ५ २ १ ४ २र
हा.हो२३४हा। भिमा३ता५या६५६यि॥(२) मानस्तर

२र र १ २ १ २ र १ १ २
भी३मातयायि। मानास्तरा। भिमातया२यि। इहा

१ २ ४ ५ २ ३ ५ १ २ १
३। आस्मा३न्बायिन्ना। हाहो२३४हा। भायिरवतात्।

२ १ २ १ २ १ २ ४ ५ २
अभिष्टा२३यिभायि:। इहा३। आना३:स्मायि। हा

३ ५ २ २ ४ २ १ १ १ १
हो२३४हा। बुया३मा५या६५६। हे२३४५(३)॥१६*॥[३]

५ ४ २ ३ ४ ५ १ र र
॥ पृष्ठम्॥ पिबा३सुतस्यरसिनाः। मत्स्वानइन्द्रगो

१ १र १ र र र र १
मता२३होइया। आपिर्नोबोधिसधमाद्येवृधा २ ३ योइ

२ १र २ १ २
या। अस्माँ३आ२३स्रा। तुतायिधा२ ३या ३ ४ ३:॥(१)

५ ४ १ २ ४ र ५ १ र र १
अस्मा३ँ अवन्तुतेधियाः। अस्माँ अवन्तुतेधियार ३ यो

* ऊ० गा० १३प्र० १अ० १६षा०।

२र १र र र र र १ २र
ड्या । भूयामतेसुमतौवाजिनोवया२३ऽ्होइया । मा
१ २ १र २ ५र४ २ ३
नस्ता२३रा । भिमाता२३या३४३यि ॥(२) माना३स्तर
४ र ५ १र र १ २ १र
भिमातयायि । मानस्तरभिमातया२३यिहोइया । अस्मा
र र १ २र १ १
श्चित्राभिरवतादभिष्टिभा२३यिर्होइया । आनःसू२३म्ना
१र १ १
यि । युयामा२३या३४३ । ओ२३४५ई । डा(३) ॥१२*॥[४]
२र र र
॥ जमदग्नेःसाम ॥ पिबासुतस्यरसिनोमत्स्वाहाउ ।
१ १र २ २ १ र
ना२ः । इन्द्रा२गोमता२३ः । हाउ । आपिना२बो ।
१ ७ १र २ १ ७
धिसाधमा२ । दियेवृधा२३ । हाउ । अस्माऽअवा
२ ३ २ १ ३ ५र र २ ३
२३ । हा । तुते३होर । या२३४औहोवा । धियज
१ १ १ १ २ र र र र
२३४५ ॥(१) अस्माऽअवन्तुतेधियोस्मान्हाउ । वा२ ।
१ १र २ र १र र १ ७
कृत्२तेधिया२३ः । हाउ । भयामा२ते । इमतौवा
१ र २ र १ ७ २
२ । जिनोवया२३म् । हाउ । मानास्तरा२३ । हा ।

* क० गा० १६प्र० १ख० १२घा० ।

२ १ १ २ ५र र २ ३ १ १ १ १
भिमा३हो२। या२३४औहोवा। तयज्ञ २ ३ ४ ५॥(२)

२र र र र र १ १ १र
मानस्तरभिमातयेमानोहाउ। स्ता२ः। अभा२यिमा

२ १र र १ ७
तया२३यि। हाउ। अस्मान्वा२यित्रा। भिरावता२

१ २ र १ ७
त्। अभिष्टिभा२३यिः। हाउ। आनाःसुम्ना २ ३ यि।

२ ३ २ १ २ ५र र २ ३
हा। षुया ३ हो २। या २ ३ ४ औहोवा। मयज्ञ

१ १ १ १
२ ३ ४ ५(३)॥ १६*॥ [५] १६

अथ त्रिरस्मैसप्तेति तृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २ ३ १ २
त्रिरस्मैसप्तधेनवोदुदुह्रिरे

३ २ ३ १ २ ३ १ २
सत्यामाशिरम्परमेव्योमनि।

३ २ ३ १र २र ३ २ ३
चत्वार्यन्याभुवनानिनिर्णिजे

१ २ ३ २ ३ १र २र
चारूणिचक्रेयदृतैरवर्द्धत॥ १†॥

---

* ऊ० गा० १८प्र० २ख० १६गा०।

† छ० आ० ६, १, २, ७ (२भा० १८८पृ०) = ऋ० वे० ७, २, २३, १।

"परमे व्योमनि" विविधमोममवनं गमनं देवानामत्रेति व्योमा यज्ञः, तस्मिन् स्थिताय यद्वा परमे व्योमनि अन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्यां" सत्यं यथार्थभूतम् "आशिरम्"आश्रयमाणं "दुदुह्रिरे" दुहन्ति [यद्वा, त्रिःसप्त द्वादश मासाः पञ्चर्त्तवः अथ इमे लोका असावादित्य एकविंश इति, एतैः सर्वैः सह गोषु उत्पद्यते तद्गावो दुहन्तीति]। किञ्चायं सोमः"अन्या" अन्यानि "चत्वारि" "भुवनानि" उदकानि वसतीवरीस्तिस्त्रैकधना इति, तानि चतुःसङ्ख्याकानि "चारूणि" कल्याणानि उदकानि "निर्णिजे" निर्णेजनाय परिशोधनाय "चक्रे" करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैरेव "वर्द्धितः" वर्द्धितवान् तदा करोति॥

"दुदुह्रिरे," "परमेव्योमनि"-"दुदुह्रे," "पूर्वेव्योमनि"—इति पाठौ॥ १॥

अथ द्वितीया।

१र २र ३ १ २ ३ १ २
सभक्षमाणो अमृतस्य चारुण

३ २उ ३ १ २ ३ १ २
उभे द्यावा काव्येना विशश्रथे।

१ २ ३ २ ३ २ ३ १ २ ३
तेजिष्ठा अपो मꣳहना परि व्यत

१ २ ३ २ ३ १ २ ३ १ २ ३ २
यदी देवस्य श्रवसा सदो विदुः॥ २*॥

* ऋ० वे० ७, २, २३, २।

"सः" "भक्ष्यमाणः" "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य ["क्रियाग्रहणमिति कर्म्मणः सम्प्रदान-सञ्ज्ञा, "चतुर्थ्यर्थे बहुलम् (२, ३, ६२)"—इति षष्ठी] चारूदकं भक्ष्यमाणः [इकारलोपश्छान्दसः (३, ४, ९७)] भिक्ष्यमाणः यष्टृभिः याच्यमानः सन् "उभे" "द्यावा" [द्यावादेशस्य द्वन्द्वे विहितत्वात् उत्तरपदाभावेऽपि द्वन्द्वः प्रतीयते] उभे द्यावापृथिव्यौ "काव्येन" कवि-कर्म्मणा "वि शश्रथे"* विहृतकारातिशयेन निमित्तेन प्रत्नोदकेन सम्पूरयतीत्यर्थः। किञ्च "तेजिष्ठाः" अतिशयेन दीप्तानि "अपः" उदकानि "मंहना" महत्त्वेन "परि व्यत" तदा परित आच्छादयति। "यदि" यदा ऋत्विजः "देवस्य" द्योतमानस्य सोमस्य "सदः" स्थानं "अवसा"† हविषा युक्ताः सन्तः "विदुः" यागार्थं जानन्ति लभन्ते तदा आप्नोतीति। [विद ज्ञाने (अदा० प०) "सिजभ्यस्त (३, ४, १०९)"—इति झेर्जुसादेशः॥

"भक्ष्यमाणः"-"भिक्ष्यमाणः"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३ १
तेअस्यसन्तुकेतवोम्टत्यवो

२ ३ १ २ ३ १र २र
दाभ्यासोजनुषीउभेअनु।

---

* 'विशश्रथे—विविधं शिथिलीकरोति'—इति वि०।

† 'अवसा—अन्नेन बलेन वा'—इति वि०।

१ २ ३ १ २ ३ १र २ १
येभिनृम्णाचदेव्याचपुनत

२र ३ १ २
आदिद्राजानम्मननाअगृभ्णात ॥ ३* ॥ १७

"अस्य" एतादृशस्य सोमस्य "केतवः" प्रज्ञापकाः सर्वैश्चाय-नीया रश्मयः। कीदृशाः? "अमृत्यवः" मरण-धर्म्म-रहिताः अतएव "अदाभ्यासः" ["दभेश्चेति वक्तव्यम् (७, ३, ६८ वा०)"—इति यत्] परैरहिंस्यास्त्वेतादृशा अस्य रश्मयः "उभे" "जनुषी" जन्मना स्थावर-जङ्गमात्मके द्वे "अनु" लक्षीकृत्य "सस्तु" रचन्तु [ओषधीनामग्रे सोमो रेतो निषिञ्चति यस्मात् मनुष्याणाञ्च धाराः स्रवति खलु] सोऽयं "येभिः" यैः केतुभिः "नृम्णा" नृम्णानि बलानि "देव्या" देवार्हाणि चान्नानि "पुनते" प्रेरयति। "आदित्" अभिषवानन्तरमेव† "राजानं" सोमं "मनना:" मननीयाः स्तुतयः "अगृभ्णत" परिगृह्णन्ति प्राप्नुवन्तीत्यर्थः "हृग्रहोः"—इति छान्दसो भकारः॥ ३ ॥१७

१ ५र ४ ५र ४ ५र २
॥ मारुतम्॥ त्रा२ ३ ४यिः। अस्मैसप्तधेनवोदुद्री।

४ ५ २ १र २ २ र १
दोहायिरायि। सत्यामाशिरम्परम्मयि। वियोमानी२।

* ऋ० वे० ७, १, २३, २।

† 'आत्'-'इत्'—इति पदपूरणौ—इति वि०।

१र र २ १ २ ३
चत्वार्य्यन्याभुवना । निनिर्णायिजा२३यि । चारूणा२३

५ २र१ २र ५ २ ४ १
४यिवा । क्रेयहतेः । आवा३ह्वा५ता६५६ ॥(१) सा२३

५ र र ४ ५ र ४ ५ १ र र र र
४ः । भक्षमाणोअमृतस्यचौ । चारूणाः । उभेद्यावाका

र २ २ र र र २
व्येना । विश्वआथा२यि । तेजिष्ठाअपोमᳪहना । परि

२ ३ ५ २ १ २र १ २
व्याता२३ । यादोदा२३४यिवा । स्वश्रवसा । सादो३

४ १ ५ र ४ ५र र
वा५यिदू६५६ः ॥(२) ते२३४ । अस्यसन्तुकेतवोअमी ।

४ ५ १ र र र २ र १ १र
होर्त्त्यावाः । अदाभ्यासोजनुषी । उभेआनू२ । येभि

र र २ १ २ १ ५
र्नृम्णाचदेव्या । चपुनादा२३यि । आदिद्रा २ ३ ४जा ।

२१ २र १ २ ४
नम्मनना: । आगा३म्णा५ता६५६(३) ॥ १२* ॥ [१] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

पञ्चमः खण्डः ॥ ५ ॥

* ऊ० गा० ६प्र० ९ षा० १२ षा० ।

अथ षष्ठे खण्डे—

अभिवायुमिति त्रृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

३ २ ३ २ ३क २र ३ २
अभिवायुंवीत्यर्षागृणानो
२ ३ १र १र ३ १ २
ऽ३ऽभिमित्रावरुणापूयमानः ।
३ १र २र ३ १२ ३ २
अभीनरन्धीजवनᳬरथेष्ठा
३ १ ३ १ २ ३ १ २
मभीन्द्रंवृषणंवज्रबाहुम् ॥ १* ॥

हे सोम ! "गृणानः" स्तूयमानस्त्वं "मित्रावरुणा" मित्रावरुणौ च पानाय "अभि" गच्छ । किञ्च "नरं" सर्वस्य नेतारं, "धीजवनं" बुद्धया समं वेगं कुर्वाणं,† "रथेष्ठां" रथे तिष्ठन्तम् [ अनेनाश्विनावभिधीयते ; एकवचनन्तु प्रत्येक-विवक्षया समुदाय-विवक्षया वा ; एतादृशावश्विनौ चाभिगच्छ ]। तथा "वृषणं" कामानां वर्षकं "वज्रबाहुं" वज्र-युक्त-हस्तम् "इन्द्रं" च त्वं पानाय "अभि" गच्छ ॥ १ ॥

---

* ऋ० वे० ७, ४, २०, ४।

† 'धीजवनं—धीर्बुद्धिः तया जवनं वेगवन्तम् अथवा मनोजवैरश्वैः गन्तारम्' —इति वि०।

अथ द्वितीया।

३ १ १र ३ १ २ ३ १ २ २ ३ १ २ ३ १ १
अभिवस्त्रा सुवसनान्यर्षाभिधेनूः सुदुघाः पूयमानः।
३ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अभिचन्द्रा भर्त्तवे नो हिरण्याभ्यश्वान्रथिनो देव सोम॥ २* ॥

हे "सोम!" अस्माकं "सुवसनानि" सुपरिधानानि "अभि" गमय [ यद्वा, सुवसनानि शोभन-वस्त्र-सहितानि "वस्त्रा" वस्त्राण्याच्छादकानि धनानि "अभि" गमय। किञ्च "पूयमानः" पवित्रेण त्वं "सुदुघाः" सुष्ठु पयसो दोग्ध्रीः "धेनूः" नवप्रसूतिका गाः "अभि" प्रापय। अपिच "चन्द्राणि" आह्लादकानि† "हिरण्यानि" "भर्त्तवे" भरणाय पोषणाय "नः" अस्माकमर्थं‡ "अभि" गमय। तथा हे "देव" स्तोतव्य! हे "सोम!" "रथिनः" रथवतः अश्वान् अस्माकम् "अभि" प्रापय॥ २॥

अथ तृतीया।

३ १ २ ३ १र २र ३ २उ ३ १ २ ३ १ २
अभीनो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः।
३ २उ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ १ २
अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः॥ ३¶ ॥१८

हे सोम! पवित्रेण "पूयमानः" त्वं "दिव्या" दिव्यानि

---

* ऋ० वे० ७, ४, १०, ५।

† 'चन्द्राणि — काम्यानि' — इति वि०।

‡ 'नः — अस्मभ्यम्' — इति वि०।

¶ ऋ० वे० ७, ४, २१, १।

दिवि भवानि "वसूनि" धनानि "नः" अस्माकम् "अभ्यर्ष" अभिगमय तथा "पार्थिवा" पार्थिवानि पृथिव्यां भवानि "विश्वा" विश्वानि सर्वाणि धनान्यभिगमय। तथा "येन" त्वदीयेन सामर्थ्येन "द्रविणं" धनं "वयम्" "अश्नवाम" अभि व्याप्नुयाम तत् सामर्थ्यम् "अभि" गमय। किञ्च "आर्षेयम्" ऋषीणामृषिपुत्राणां योग्यं धनं "जमदग्निवत्" जमदग्नेर्यथा त्वं प्रापय एवं "नः" अस्माकमपि अभ्यर्ष [ यद्वा, आर्षेयम्, ऋषीणां योग्यं मन्त्रं जमदग्नेः स्वभूतं मन्त्रं यथा स्वादुतमम् अकार्षीः एनमस्माकं तादृशं मन्त्रं स्वादुतमं कुर्विति मन्त्रद्रष्टा स्तोता कुत्सो नाम ऋषिः प्रार्थयते ]॥ ३ ॥ १८

२ २ २ १र २
॥ पार्थम् ॥ ओ३ह्वो३ह्वोयि। अभिवायूम्। वी३

१ २ ३ ४ ५ २ १ २ १ र १ ३ ४ ५
तिप। षागृणाना:। अभिमित्रा। वरुणा। पूयमाना:।

२ र १ ३ १ २ ३ ४ ५ १ १
अभीनराम्। धी३जव। न७रथेष्ठाम्। अभिइन्द्राम्।

२ १ १ २ ४
वृषणाम्। वा ३ ४ ३। ज्रा३वा५ह्व ६ ५ ६ म्॥(१)

२ १ २ १ २ ३ ४ ५ २ १र २ १
अभिवस्त्रा। सुवस। नानियर्षा। अभिधेनू:। स्वदु

र २ ३ ४ ५ २ १ २ १ र २ ३ ४
घा:। पूयमाना:। अजिचन्द्रा। भर्त्तवम्। नोह्वि

५ २ १ २ १ २ २ ४
ष्या। अभियश्वान्। रथिन:। दा३४३यि। वा३सो

२ र १र २ १ २ ३ ४ ५
पुमा६५६ ॥(२) अभीनोआ । षा३दिवि । यावद्भनो ।
२ १ २ १ २ १ ३ ४ ५ २ १र
अभिविश्वा । पा३र्थिवा । पूयमानाः । अभियेना ।
२ १ २ ३ ४ ५ २ २ २ १र
द्रविणम् । अश्नवामा । औ३ह्वो३ह्वोयि । अभियषँ ।
२ १ २ २ ४
या ३ जमत् । आ ३ ४ ३ । ग्रा ३ यिवा ५ न्ना ६ ५ ६ः

(३) ॥ १४* ॥ [१] १८

अथ† यज्ञायथाइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१र १र ३ १ २ ३ १ २
यज्ञायथा अपूर्व्यमघवन्वृत्रहत्याय ।
१ २ ३ १ २ ३ १ २ ३ १र २र
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतोदिवम् ॥ १‡ ॥

हे "अपूर्व्य"¶ त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित ! हे "मघवन्" मंहनीय-धनवन् ! "इन्द्र !" "वृत्रहत्याय" वृत्रहननाय§ "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोऽसि "तत्" तदानीमेव

---

* ऊ० गा० ८प्र० २अ० १४सा० ।

† 'उक्तोऽभिप्लवः । उक्तः पृष्ठ्यः । उक्तोऽभिजित् । इदानीं स्वरसामानः'—इति वि० ।

‡ ऋ० वे० ६, ६, १२, ५ ।

¶ 'अपूर्वगुण !'—इति वि० ।

§ 'वृत्रहन्ता-इन्द्रोऽभिधीयते, तस्मै वृत्रहत्याय हविर्दद्म इति वाक्यशेषः'—इति वि० ।

"पृथिवीं" प्रथमानां भूमिम् "अप्रथयः" प्रथितां दृष्टामकरोः। "उत" अपि च "तत्" तदानीमेव "दिवं" द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निरुद्धामकार्षीः [एतादृशं वीर्यं त्वदन्यस्य न सम्भवतीत्यर्थं द्योतयति अपूर्व्येति पदम्]॥

"उतोदिवम्"-"उतद्याम्"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ २ ३ १र २र
तत्तेयज्ञोअजायततदर्कउतहस्कृतिः।
१र २र ३ १ २ ३ २ ३ १उ ३ १ २
तद्विश्वमभिभूरसियज्जातंयच्चजन्त्वम्॥ २*॥

हे इन्द्र! "यद्" यदा त्वम् अजायथाः तदानीं "ते" त्वदर्थं "यज्ञः" अग्निष्टोमादिः "अजायत" सोम-पानार्थमभूत्। "उत" अपिच "तद्" तदानीं "हस्कृतिः" [हस हसने (भ्वा॰प॰) हासकारी प्रीत्यर्थं क्रियमाणो हर्ष-सूचको द्वितीय-मन्त्रोऽपि अजायत। किञ्च तदा "यद्" "जातं" भूतजातं "यच्च" "जन्त्वम्" [कृत्यार्थे त्व-प्रत्ययः] जनितव्यं विश्वमस्ति "तत्" "विश्वं" सर्व्वम् "अभिभूः असि" स्व-महिम्ना अभिभूतवानसि॥ २॥

अथ तृतीया।

३ १ २ ३ १र २र ३ १र २र ३ २
आमासुपक्वमैरयआसूर्य्यꣳरोहयोदिवि।
३ १र २र ३ २ ३ २ ३ १ २ ३ २
घर्मन्नसामन्तपतासुवृक्तिभिर्जुष्टङ्गिर्वणसेबृहत्॥३†॥१९

* ऋ॰ वे॰ ६, ६, १२, ६।    † ऋ॰ वे॰ ६, ६, ११, ७।

हे इन्द्र! "आमासु" अपक्वासु गोषु "पक्वं" पयः "ऐरयः" प्रेरय [ तथा च मन्त्रः—"आमासुचिद्दधिषे पक्वमन्तः" इति। किञ्च, "दिवि" द्युलोके "सूर्य्यम्" "आरोहयश्च" [ पूर्वं पणयो-नामासुरा अङ्गिरसां गा अपहृत्यान्धकारावृते कस्मिंश्चित् पर्वते स्थापितवन्तः, ततोऽङ्गिरसः इन्द्रं स्तुत्वा गाः पुनरस्मभ्य-माहरेति तैरुक्तम् इन्द्रो गवां स्थानं तमसावृतं दृष्ट्वा तत्र गो-प्रदर्शनाय द्युलोके सर्वप्रकाशकं सूर्य्यमारोहितवान् ] स्थापित वानसि [ "चादि-लोपे विभाषा ( ८, १, ६२ )"—इति पूर्वस्य ऐरयइत्यस्य न निघातः। अथ परोक्षतोऽर्द्धर्चः—] हे स्तोतारः! "सुवृक्तिभिः" शोभनाभिः स्तुतिभिः "न तपत" इन्द्रं तीक्ष्णीकुरुत [ इन्द्रं स्तुतिभिः यथा तपन्ति तद्वत् ]। ततः "गिर्वणसे" गीर्भिर्वननीयायेन्द्राय "जुष्ट" प्रीतिकरं पर्य्याप्तं वा "बृहत्" महत् बृहदाख्यं वा "साम" गायत ॥३॥१९

अथ मत्स्यपायीति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१र २र ३ २ ३ १ २ ३ १र २र
मत्स्यपायितेमहःपात्रस्येवहरिवोमत्सरोमदः।

१ २ १ २ ३ १ २ ३ १ १ ३ १ २
वृषातेवृष्णइन्दुर्वाजीसहस्रसातमः॥ १* ॥

हे "हरिवः" हरिभ्यां तद्वन्निन्द्र! "महः" महान् पूज्यो-ऽयं सोमः "पात्रस्येव" पात्रेणेव सोमपात्रेण यथा धार्य्यते सोमः,

* ऋ० वे० ६, ४, १८, १।

तत्सदृशेन त्वया [ तृतीयार्थे षष्ठी ( २, १, ८५ )। यद्वा, 'पात्रस्य' 'ते' तव स्वभूतः 'मदः' महान् सोमइति वा योजना ] "अपायि" पीतः [ आशंसाया विवक्षितार्थत्वात् भूतेऽर्थे प्रयोगः ] यतः पिब अतो "मत्सि" माद्यसि मादयस्व वा। "मत्सरः" मद-साधनः, "मदः" तर्पयिता; "वृषा" वर्षिता, "इन्दुः" क्लेदयिता आह्लाद-कारीत्यर्थः, "वाजी" अन्नवान् अन्नकार्य्य-तृप्ति-सद्भावात् अन्नवानित्युच्यते, "सहस्रसातमः" अपरिमित-दातृतमः सहस्र-पुरुष-सम्भजन-पर्य्यन्त-शक्त्यतिशयी वा एवं महानुभावः सोमः सम्पादितस्तं पिबेत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ ३ २उ ३ २ ३ १ २
आनस्तेगन्तुमत्सरोवृषामदोवरेण्यः।
३ १ १ ३ १ २ ३ १र २र
सहावाꣳइन्द्रसानसिःपृतनाषाडमर्त्त्यः॥ २* ॥

हे इन्द्र! "ते" त्वां "मत्सरः" मर्षण-साधनः सोमः "आगन्तु" आगच्छन्तु। कीदृशोऽयम्? "वृषा" वर्षकः "मदः" तर्पयिता, "वरेण्यः" वरणीयः, "सहावान्" सहायवान् अस्मद्दत्तेन सोमेन सहायवान् सन् "सानसिः" अस्माभिः सम्भजनीयः, "पृतनाषाट्" शत्रुसेनायाः अभिभविता अमर्त्यश्च भवेति ॥ २ ॥

---

* ऋ० वे० २, ४, १८, २।

